# अस्मदीयं कथनम्

विद्यालयस्तरीयशिक्षामुद्देश्यप्रधानां व्यावहारिकीं सामयिकीं वृत्तिदायिनीं च विधातुं समये समये पाठ्यक्रम-पाठ्यपुस्तकविकास-परिमार्जनानुकूलनकार्याणि निरन्तरं सञ्चाल्यमानानि सन्ति । विद्यार्थिषु राष्ट्रराष्ट्रियते प्रति सम्मानभावनामुद्भाव्य नैतिकानुशासन-स्वावलम्बनादि-सामाजिक-चारित्रिक-गुणानामाधारभूत-भाषिकशिल्पस्य विकासपूर्वकं सहयोगात्मकस्य दायित्वपूर्णस्य चाऽऽचरणस्य विकासोऽद्यत्वे आवश्यको दृश्यते । अस्या एवावश्यकतायाः परिपूर्तये शिक्षासम्बद्धैर्महानुभावैः सम्मिलितानां गोष्ठीनामन्तःक्रियायाश्च निष्कर्षेण निर्मितं २०७८ तमस्य वैक्रमाब्दस्य पाठ्यक्रममनुसृत्य पुस्तकमिदं निर्मितं वर्तते । शिक्षा विद्यार्थिषु वर्तमानस्य ज्ञानपक्षस्यान्वेषणं विधाय शिक्षणशिल्पेन जीवनस्य सम्बन्धं स्थापयति । शिक्षया विद्यार्थिषु स्वाधिकारस्य, स्वतन्त्रतायाः, समानतायाश्च प्रवर्धनाय, स्वस्थजीवनस्याभ्यासाय, तार्किकविश्लेषणेन निर्णयाय, वैज्ञानिकविश्लेषणेन व्यक्ति-समाज-राष्ट्राणां सबलविकासाय चाग्रेसरणशीलं सामर्थ्यं विकसनीयम् । एवं व्यक्तेः नैतिकाचरणप्रदर्शनाय, सामाजिकसद् भावप्रवर्धनाय, पर्यावरणस्य समुचितप्रयोगशिक्षणाय, दृढशान्तौ प्रतिबद्धतायै च शिक्षायाः आवश्यकता समाजे अवलोक्यते । तेन समाजसापेक्षतया ज्ञान-शिल्प-सूचना-सञ्चार-प्रविधीनां प्रयोगसमर्थाः, स्वावलम्बिनः, व्यावसायिकशिल्पाभ्यासनिरताः, राष्ट्रं राष्ट्रियतां राष्ट्रियादर्शं च प्रति सम्मानविधायकाः, समाज-स्वीकार्याः, सदाचरणशीलाः, स्वसंस्कृति-संस्कारपालनपराः, परसंस्कृत्यादिषु सहिष्णवश्च नागरिकाः शिक्षया निर्मातव्याः । एवं कल्पनाशीलानां रचनाशिल्पिनाम्, नैरन्तरिकपरिश्रमेणोद्यमशीलानाम्, विचारे उदात्तानाम्, व्यवहारे आदर्शमयानाम्, सामयिकसमस्यानां व्यवस्थापने साफल्याधायकानाम्, स्वावलम्बिनाम्, देशभक्तानाम्, परिवर्तनोद्यतानाम्, चिन्तनशीलानाम्, समावेशिसमाजनिर्माणे योगदानं करिष्यमाणानां च नागरिकाणां निर्माणं शिक्षया विधातव्यमिति समाजस्यापेक्षा दृश्यते । इमानेव पक्षान् विचार्य 'राष्ट्रिय-पाठ्यक्रम-प्रारूप, २०७६' इत्यनुसारेण निर्मितस्य कर्मकाण्डविषयकपाठ्यक्रमस्याधारेण दशम्याः कक्षायाः पाठ्यपुस्तकमिदं विकसितं वर्तते ।

सर्वप्रथमं डा. ऋषिराम-पोखरेलः, केशवः अधिकारी, शम्भुप्रसाद-दाहालः, हरि-गौतमप्रभृतीनां महानुभावानां कार्यदलेन लिखितमिदं पुस्तकं मनोजः घिमिरे, शिवप्रसादः लामिछाने, पर्वतः घिमिरे, पुरुषोत्तमः घिमिरे- प्रभृतीनां महानुभावानां कार्यदलेन परिमार्जितं सम्पादितञ्चास्ति । अस्य पाठ्यपुस्तकस्य विकासे पाठ्यक्रमसिद्धान्तसंरचनयोः नवीनतमधारणामनुसृत्य परम्परागतानां

शिल्पानामनुसरणं कृतमस्ति । अस्मिन् कार्ये अस्य केन्द्रस्य महानिर्देशकः वैकुण्ठप्रसादः अर्याल, प्रा.डा. माधवशरणः उपाध्याय, प्रा.डा. आनन्दप्रसादः घिमिरे, प्रा.डा. ऋषिरामः पौडेल, निश्चलः अधिकारी, टुकराजः अधिकारी, शिवराजः लामिछाने-प्रभृतीनां महानुभावानां विशेषसहयोगो विद्यते । अस्य रूपसज्जा भक्तबहादुरः कार्की इत्याख्येन महानुभावेन कृतमस्ति ।

पाठ्यपुस्तकं शिक्षणप्रक्रियाया महत्त्वपूर्णसाधनं भवतीति नाविदितं शेमुषीमताम् । सानुभवाः शिक्षकाः, जिज्ञासवश्छात्राः, सविधिकर्मकराश्च पाठ्यक्रमलक्ष्यीकृतान् विषयान् नैकविधस्रोतसां साधनानाञ्चोपभोगेन अध्यापयितुमध्येतुं कर्म कर्तुं च प्रभवन्ति । अनेकैः कारणैः सर्वेष्वेव विद्यालयेषु सरलतया पाठ्योपकरणानामुपलब्धेरभावाद् अध्ययनकार्यं केवलं पाठ्यपुस्तकाश्रितं भवतीति तथ्यमात्मसात्कृत्य प्रस्तुतमिदं पाठ्यपुस्तकं यथासम्भवं स्तरयुतं विधातुं प्रयासो विहितः, तथापि पाठ्यपुस्तकेऽस्मिन् यत्र यत्र त्रुटयोऽल्पताश्च विदुषां दृष्टिपथमागच्छेयुस्तत्र तत्र परिष्कारे परिवर्धने च दृग्गोचरीभूतानां त्रुटीनां परिमार्जनादिकार्यजाताय परामर्शप्रदानविधौ शिक्षकच्छात्राभिभावकपाठकविशेषज्ञानां महती प्रभावकारिणी भूमिका भवति । अत उक्तविषयेषु रचनात्मकपरामर्शदानेनोपकर्तुं पाठ्यक्रमविकासकेन्द्रमिदं तांस्तान् सर्वानेव महानुभावान् सप्रश्रयमभ्यर्थयते ।

नेपालसर्वकारः

**शिक्षाविज्ञानप्रविधिमन्त्रालयः**

**पाठ्यक्रमविकासकेन्द्रम्**

# विषयसूची

# विवाहपद्धतिः

## १. स्वयम्वरविधिः

**विधिरयं क्षत्रियाद्याचारपरम्पराप्राप्तः ।**

### (क) तत्रादौ कन्यायाः प्रायश्चित्तगोदानम्

‘**नमो गोभ्यः**’ इति गां, ‘**नमो ब्रह्मण्यदेवाय**’ इति देयं द्विजं च सम्पूज्य, कुशादीन्यादाय सङ्कल्पं कुर्यात् –

ॐ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य ......गोत्रोत्पन्ना ......नाम्नी देव्यहं मम भर्तृसहयोग धर्म्यप्रजोत्पादन- स्वगृह्योक्तविविधधर्माचरणाद्यधिकारसिद्धिपूर्वकं श्रीमत्परमेश्वर प्रीतिफलकैतद्विवाहोपयुज्यमानवर्णवश्यतारायोनिग्रहमैत्र्यादिसम्मेलनपूर्वकं ग्रहानुकूल्यसंयोजनाद्यनुपलब्धि-जनितसकलदोषनिवारकाऽऽचारपरम्पराप्राप्ते स्वयंवरकर्मणि ज्ञाताज्ञातादिसकलपापक्षयद्वाराऽधिकारसिद्धये तथाऽनाचरितानामप्याचरणीयानां तत्तन्नियमानामाचरितवत्त्वसिद्धिद्वारा एतत्कर्मजन्यपूर्वनिर्दिष्टफलसिद्धये इदं कृच्छ्रप्रत्याम्नायीभूतां गां रुद्रदैवतां (तन्निष्क्रयद्रव्यं विष्णुदैवतं वा) ......गोत्राय ......शर्मणे ब्राह्मणाय तुभ्यं सम्प्रददे ॥

प्रार्थना – **ॐ कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**

**तीर्थदेवमयी यस्मात् तस्माच्छान्तिं प्रयच्छ मे ॥**

दानप्रतिष्ठा – ॐ अद्यकृतैतत् कृतस्य प्रायश्चित्तनिमित्तकगोदानकर्मणः साङ्गतासिद्ध्यर्थम् इदं दानप्रतिष्ठाद्रव्यं पूर्वोक्तगोत्राय सुपूजिताय ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे ।

### (ख) प्रतिज्ञासङ्कल्पः

कन्या कुशादीन्यादाय सङ्कल्पं कुर्यात् –

ॐ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य ......गोत्रोत्पन्ना ......नाम्नी देव्यहं मम विधास्यमानविवाहपूर्वविधेयस्वयम्वर-कर्मणि दीपकलशगणेशपूजन-पुण्याहवाचनपूर्वकं शच्यादिदेवतानां पूजनमहं करिष्ये ।

‘**पृष्टो दिवि**’ इति दीपं सम्पूज्य प्रार्थयेत् –

**ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**

**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः** ॥ ॐ दीपनारायणाय नमः ।

यथाविधि कलशं सम्पूज्य प्रार्थयेत् –

**ॐ वरुण त्वं महाभाग सर्वदेवप्रपूजितः ।**

**वितते मम यज्ञेऽस्मिन्नविघ्नं कुरु सर्वदा** ॥ ॐ कलशस्थवरुणाय नमः ॥

ततः यथाविधि गणेशं सम्पूज्य प्रार्थयेत् –

**ॐ वक्रतुण्ड महाकाय कोटिसूर्यसमप्रभ ।**

**अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ।**

**अविरलमदजलनिवहं भ्रमरकुलानेकसेवितकपोलम् ।**

**अभिमतफलदातारं कामेशं गणपतिं वन्दे** ॥ ॐ श्रीमन्मङ्गलमूर्तये महागणाधिपतये नमः ॥

## (ग) ब्राह्मणवरणं पुण्याहवाचनञ्च

ततो वरणसामग्रीं समादाय –

**ॐअद्येह......गोत्रा.......नाम्नी देव्यहं मम स्वयम्वरकर्मणि पुण्याहवाचनार्थम् एभिर्गन्धाक्षतद्रव्यवस्त्रादिभिर्युष्मानहं वृणे** । इति त्रिश्चतुरो वा ब्राह्मणान् वृत्वा कृताञ्जलिः

कन्या - ......**गोत्रा .......नाम्नी देव्यहं मम स्वयम्वरकर्मणि** (इति प्रतिवारमुक्त्वा)

**भो ब्राह्मणाः ! पुण्याहम् भवन्तो ब्रुवन्तु ३ ।**

ब्राह्मणाः - **ॐ पुण्याहम् ३ । ॐ पुनन्तुमा०**

कन्या - **भो ब्राह्मणाः ! स्वस्ति भवन्तो ब्रुवन्तु ३ ।**

ब्राह्मणाः - **ॐ स्वस्तिः ३ । ॐ स्वस्तिनऽइन्द्रो०**

कन्या - **भो ब्राह्मणाः ! ऋद्धिं भवन्तो ब्रुवन्तु ३ ।**

ब्राह्मणाः - **ॐ ऋद्धिः ३ । ॐ सत्रस्यऽऋद्धिः०**

कन्या - **भो ब्राह्मणाः ! वृद्धिं भवन्तो ब्रुवन्तु ३ ।**

ब्राह्मणाः - **ॐ वृद्धिः ३ । ॐ ज्यैष्ठ्यं च म०**

कन्या - **भो ब्राह्मणाः ! कल्याणं भवन्तो ब्रुवन्तु ३ ।**

ब्राह्मणाः - **ॐ कल्याणम् ३ । ॐ यथेमाम्०**

कन्या - **भो ब्राह्मणाः ! शान्तिं भवन्तो ब्रुवन्तु ३ ।**

ब्राह्मणाः - **ॐ शान्तिः ३ । ॐ द्यौः शान्तिः०**

कन्या - **भो ब्राह्मणाः ! श्रियं भवन्तो ब्रुवन्तु ३ ।**

ब्राह्मणाः - **ॐ श्रीः ३ । ॐ मनसः कामम्०**

**ॐ मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ।**

**शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव** ॥ इत्याशिषो गृह्णीयात् ।

## (घ) इन्द्राण्यादिपूजनम्

ताम्रस्थाल्यामष्टदलं विलिख्य पूर्वादिक्रमेण पूजयेत्-

ॐ कौसल्यायै नमः, ॐ सीतायै नमः, ॐ मन्दोदर्यै नमः, ॐ तारायै नमः, ॐ अञ्जनायै नमः, ॐ दमयन्त्यै नमः, ॐ सुवर्चोवत्यै नमः, ॐ नर्मदायै नमः, ॐ गङ्गायै नमः, ॐ गान्धार्यै नमः, ॐ कुन्त्यै नमः, ॐ द्रौपद्यै नमः, ॐ सुभद्रायै नमः, ॐ हिडिम्बायै नमः, ॐ छायायै नमः, ॐ रोहिण्यै नमः, ॐ मित्रायै नमः, ॐ बुद्धिमत्यै नमः, ॐ सावित्र्यै नमः, ॐ लक्ष्म्यै नमः, ॐ उमायै नमः, ॐ रुक्मिण्यै नमः, ॐ अनसूयायै नमः, ॐ अरुन्धत्यै नमः, इति सम्पूज्य यथासम्पादितैः पाद्यादिभिरुपचारैः मध्ये शचीं पूजयेत् । ततो धूप दीपनैवेद्यादिनीराजनान्तं पूजनं विधाय गृहीतपुष्पाञ्जलिः प्रार्थयेत् -

**ॐ देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियवादिनि ।**

**विवाहभाग्यमारोग्यं पुत्रलाभं च देहि मे ॥**

**धान्यं देहि धनं देहि पशून् देहीन्द्रभामिनि ।**

**यशो देहि सुखं देहि सर्वकार्यकरी भव** ॥ इति

## (ङ) वरमाल्यार्पणम्

ज्योतिर्विदादिष्टे सुमुहूर्ते दूर्वादिरचितां माङ्गलिकीं वरणस्रजं हस्ताभ्यां धृत्वा प्रार्थयेत् –

**ॐ देवेन्द्राणि नमस्तुभ्यं महालक्ष्मि नमोऽस्तु ते ।**

**आवयोः प्रीतिरतुला त्वत्प्रसादात् सदा भवेत्** ॥

**पाण्डवानां द्रुपदजा यथा सत्या पतिव्रता ।**

**वायोरप्यञ्जना देवी यथा च्छाया विभावसोः** ॥

**शन्तनोश्च यथा गङ्गा चन्द्रस्य रोहिणी यथा ।**

**रुक्मिणी वासुदेवस्य रामस्य जानकी यथा** ॥

**धृतराष्ट्रस्य गान्धारी सावित्री ब्रह्मणो यथा ।**

**तथा भवेयं सततं त्वत्प्रसादात् पुलोमजे** ॥

**सर्वे देवाश्च मुनयो मानवाः साक्षिणो मम ।**

**मनसा कर्मणा वाचा वृतोऽयं हि पतिर्मया** ॥ इति ॥

ॐ भद्रङ्कर्णेभिःo, आनोभद्राःo, स्वस्तिनऽइन्द्रोo, मङ्गलं भगवान् विष्णुःo इत्यादीन् मङ्गलमन्त्रान् पठत्सु द्विजेषु, वाद्यमानेषु वाद्येषु तां वरणस्रजं वरस्य कण्ठदेशे निदधीत ॥ ततः पूजितानां देवानां विसर्जनं विधाय दक्षिणां दद्यात् -

**ॐ अद्येह ......गोत्रा .......नाम्नी देव्यहं मम स्वयम्वरकर्मणि कृतस्य दीपकलशगणेशशच्यादिदेवतार्चनकर्मणः साङ्गतासिद्धिद्वारा समीहितदाम्पत्यसुखसमृद्धिसिद्धये भूयसीं दक्षिणामिमां नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो यथाभागं विभज्य दातुमहमुत्सृजे ।**

इति दत्त्वा यस्य स्मृत्येति साञ्जलिरच्युतं प्रणम्य, अभिषेकं प्रसादञ्च वरपुरःसरं कन्या गृह्णीयात्। ततः कन्यावरयोरन्योन्याङ्गुलीयकमुद्राविनिमय आचारात् ।

॥ इति स्वयम्वरविधिः ॥

## २. पटलाञ्छनम्

तत्र कन्या कुशादीन्यादाय –

**......गोत्रा ......नाम्नी देव्यहं मम करिष्यमाणे विवाहकर्मणि प्राग्विधेयत्वेन शिष्टाचार-परम्परया प्राप्तं पटलाञ्छनं कर्म दीपकलशगणेशशच्यादिपूजनपूर्वकमहं करिष्ये ।**

इति प्रतिज्ञाय दीपादीनां पूजायां निवृत्तायां गृहीतपुष्पाञ्जलिः **ॐ नमोस्त्वनन्ताय** इति दीपनारायणम्, **ॐ वक्रतुण्ड** इति गणेशं च सम्प्रार्थ्य वरुणं प्रार्थयेत्-

**ॐ वरुण त्वं महाभाग सर्वदेवप्रपूजित ।**

**वितते मम यज्ञेऽस्मिन्नविघ्नं कुरु सर्वदा ॥**

ततः प्रसारिते सिततण्डुलपुञ्जेऽष्टदलं विलिख्य कमलकर्णिकायां गन्धाक्षतपुष्पाण्यादाय –

**भो शचि ! इहागच्छ इह तिष्ठ यावत् पूजां करोमि तावत्त्वं सुस्थिरा भव सुप्रसन्ना भव सुवरदा भव** इत्यावाह्य आसनं, पाद्यम्, अर्घ्यम्, आचमनीयम्, स्नानम्, पञ्चामृतस्नानम्, शुद्धोदकम्, गन्धम्, अक्षतान्, पुष्पाणि, सिन्दूरम्, पिष्टातकम्, अभ्रकम्, माल्यम्, धूपम्, दीपम्, नैवेद्यम्, पानीयम्, सौभाग्यद्रव्यम्, दक्षिणाम्, नीराजनं च समर्पयामि, शच्यै नमः । ततः प्रार्थना –

**ॐ देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियवादिनि ।**

**विवाहभाग्यमारोग्यं पुत्रलाभं च देहि मे ॥**

**धान्यं देहि धनं देहि पशून् देहीन्द्रभामिनि ।**

**यशो देहि सुखं देहि सर्वकार्यकरी भव ॥**

ततः सुमुहूर्ते वाद्यमानेषु वाद्येषु, मङ्गलान् वैदिकमन्त्राँश्च पठत्सु ब्राह्मणेषु कर्पूर-कुङ्कुम-कस्तूरी-मिश्रितपीतचन्दनाक्तपाणिद्वया कन्या ईषद्विरलिताङ्गुलिपञ्चका वरपाणिलाञ्छनयोः अधस्तात् श्वेतपटे शनैः शनैः लाञ्छनं कुर्यात् । तत्र मन्त्रौ–

**ॐ दक्षिणत उहैक उपदधाति तदेताः पुण्या लक्ष्मीर्दक्षिणतो दध्मः ।**

**तस्माद्यस्या दक्षिणतो लक्ष्म भवति तां पुण्यलक्ष्मीमाचक्षते ॥**

**ॐ कुलायिनी घृतवती पुरन्धिः स्योने सीद सदने पृथिव्याः ।**

**अभित्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि सौभगायाश्विनाध्वर्यूसादयतामिहत्वा ॥**

ततो दक्षिणासङ्कल्पः –

......**गोत्रा**......**नाम्नी देव्यहं मम शिष्टाचारपरम्परया प्राप्तस्य विवाहकर्मणः प्राक्कालविधेयपटलाञ्छनकर्माङ्गतया कृतस्य शच्यादिदेवतापूजनकर्मणः साङ्गतासिद्धिद्वारा यावदपेक्षितगार्हमेधिकसुखसमृद्धिसिद्धये न्यूनतातिरिक्ततादोषपरिहारार्थम् इदं दक्षिणाद्रव्यं रजतं चन्द्रदैवतम् नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो यथाभागं विभज्य दातुमहमुत्सृजे ।**

ततो लब्धप्रसादकुसुमादिर्वधूः साञ्जलिः – यस्य स्मृत्येत्यादिकं पठेदिति शिवम् ।

॥ इति पटलाञ्छनम् ॥

## ३. वाग्दानसङ्क्षिप्तविधिः

ज्योतिर्विदादिष्टे शुभदिने कृतशकुनदर्शनाः सुवेषाः वरपित्रा, वरभ्रात्रा, वरबान्धवेन येन केनापि वा समेताः द्व्यादयोऽष्टपर्यन्ताः युग्माः ब्राह्मणाः कन्यागृहं गच्छेयुः । श्रावयेयुश्च कन्यापित्रादिकान् कन्याप्रार्थनवचनम् -

**मत्पुत्रार्थं मद्भ्रात्रर्थं मद्बन्ध्वर्थं मन्मित्रार्थं वा प्रयच्छ निजां कन्यां महाभाग !** इति ।

ततः कन्याप्रदः (पित्रादिः) स्वीकृतभार्याद्यनुमतिः उच्चैःस्वरेण त्रिवारं **दास्यामि**-३ इत्युक्त्वा शुचिः प्रक्षालितपाणिपादः पूर्वाभिमुख उपविश्य आचम्य कुशादीन्यादाय-

**ॐ अद्येहेत्यादि देशकालौ स्मृत्वा ......शर्माऽहं दीपकलशगणेशपूजनपूर्वकं करिष्यमाणकन्याविवाहाङ्गभूतं वाग्दानं करिष्ये** ।

इति सङ्कल्प्य यथाविधि[1] दीपादीन् सम्पूज्य पुण्याहं च वाचयित्वा कन्यायाचकं प्राङ्मुखम् आसने उपवेश्य स्वयं तदग्रतः प्रत्यङ्मुख उपविश्य तं गन्धादिभिः समभ्यर्च्य धौतोत्तरीयान्तरीय-नारिकेल-ब्रह्मसूत्र-हरिद्रा-पूगीफल-ताम्बूल-चन्दनाक्षत-दूर्वादल-पुष्प-द्रव्य-सम्भृतं पात्रं हस्ताभ्यामादाय -

......**गोत्रोत्पन्ना** ......**नाम्नीमिमां कन्यां ज्योतिर्विदादिष्टे सुमुहूर्ते दास्ये** । इति तत्पात्रं दत्त्वा प्रार्थयेत् –

**ॐ अव्यङ्गयेऽपतितेऽक्लीबे दशदोषविवर्जिते** ।

**इमां कन्यां प्रदास्यामि देवाग्निद्विजसन्निधौ** ॥

इति कृताञ्जलिः पठित्वा पुनः पठेत् –

**ॐ वाचा दत्ता मया कन्या पुत्रार्थं[2] स्वीकृता त्वया** ।

**कन्यावलोकनविधौ निश्चितस्त्वं सुखी भव** ॥

ततो वरपिता वदेत् –

**ॐ वाचा दत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया** ।

**वरावलोकनविधौ निश्चितस्त्वं सुखी भव** ॥ इति ।

ततश्च सहागतान् जनान् गन्धाक्षतताम्बूलदक्षिणादिभिः सत्कृत्य कन्यां च दध्यक्षतैः कुङ्कुमाक्तैरलङ्कुर्यात् ।

---

१. दीपादिपूजनस्य पुण्याहवाचनस्य च विस्तृतो विधि षष्ठकक्षायाः कर्मकाण्डपुस्तके द्रष्टव्यः ।

२. गदाधरदीक्षितभाष्यानुसारेण वरपितरि कन्यायाचके पुत्रार्थम् इत्यस्य पुत्रभार्यात्त्वसम्पादनायेत्यर्थः । वरभ्रातृ-मित्र-बन्धुषु कन्यायाचकेषु सत्सु भ्रात्रर्थम्, मित्रार्थम्, बन्ध्वर्थम् इति यथार्हमूहः कर्तव्यः ।
अद्यत्वे वरेणैव पठितव्ये तु पुत्रार्थमिति पदमेव युक्तम् । अत एव नास्त्यूहः ।

समागता ब्राह्मणा आशीर्मन्त्रान् उच्चार्य पुष्पप्रदानेन कन्यापितरं प्रतोष्य वरेण सह वरगृहान् प्रतिगच्छेयुः । ततश्च कन्याऽपि प्रक्षालितपाणिपादा शुद्धासने उपविश्य आचम्य दीपकलशगणेशादीन् सम्पूज्य सम्प्रार्थ्य सिततण्डुलपुञ्जे शचीमावाह्य **ॐ शच्यै नमः** इति नाममन्त्रेण पाद्यार्घ्याचमनीयगन्धाक्षतादिभिर्नीराजनान्तैरुपचारैः सम्पूज्य सोपायनद्रव्यं श्रीफलं हस्तयोर्धृत्वा प्रार्थयेत् –

**ॐ इदं फलं मया देवि स्थापितं पुरतस्तव ।**
**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**
**देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियवादिनि ।**
**विवाहभाग्यमारोग्यं पुत्रलाभं च देहि मे ॥**
**धान्यं देहि धनं देहि पशून्देहीन्द्रभामिनि ।**
**यशो देहि सुखं देहि सर्वकार्यकरी भव ॥**
**त्वदाराधनतः सर्वमलभ्यं नैव भूतले ।**
**तस्माद्देहि ममैश्वर्यं विपुलं वज्रिवल्लभे ॥** इति ॥

ततः सच्चरित्राः सुवासिन्यः समङ्गलगानं कन्यां नीराजयेयुः । ब्राह्मणाश्च ॐ श्रीश्चते०, ॐ कुलायिनी०, ॐ मनसः कामम्०, ॐ दीर्घायुस्त० इत्यादिमन्त्रपाठान्ते कन्यकां प्रसादेनालङ्कुर्युः ॥

॥ इति वाग्दानविधानम् ॥

## ४. अथ वरणी

भवनद्वारसमीपं समायाते वरे कन्याप्रदः (अकृतभोजनः) पित्रादिः स्वबान्धवान् आप्तानन्यांश्च सह कृत्वा सवाद्यं समङ्गलगानं कलशं सम्भारं पुरस्कृत्य गृहीतपर्युक्षणोपचारः (स्वीकृतलाजाक्षतपुष्पादिसामग्रीकः) वाहनस्थमेव सकलशं वरं सपर्युक्षणं त्रिः परिक्रमय तिलकेनाऽलङ्कृत्य स्वकीयकलशे वरकलशेन संयोजिते वरं वाहनाद् अवतार्य कलशयुगलं समङ्गलगानं पुरस्कृत्य सज्जीकृतार्चनोपचारां द्वारभूमिं समानीय पूर्वाभिमुखं कारयेत् । स्वयं च शुद्धासने प्रत्यङ्मुख उपविश्य आचम्य कुशादीन्यादाय सङ्कल्पं कुर्यात् –

**ॐ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य ......गोत्रः ......शर्मा/वर्मा/गुप्तः/दासः अहं मम ......नाम्न्याः कन्यायाः करिष्यमाणविवाहकर्मणि समागतस्य ......गोत्रस्य ......प्रवरस्य ......शर्मणो वरस्य दीपकलशगणेशपूजन-[३] (वाग्दान) पूर्वकं यथासम्पादितोपचारैः पूजनं करिष्ये ।**

३. केचिद्वाग्दानविधानं वरणीसमये सङ्क्षेपेण कुर्वन्ति । तत्प्रकारश्च वाग्दानविधौ विद्यते । पिष्टपेषणभियाऽत्र पुनर्न लिख्यते । तत्र च पुत्रार्थमित्यस्य पुत्रोत्पादनार्थम् इत्यर्थ एव स्वीकर्त्रा वरेण मन्तव्यः ।

ततो यथाविधि दीपादीन् सम्पूज्य[४] (वाग्दाने पूर्वमकृते वाग्दानाविधिना वाग्दानं च कृत्वा) पीतवस्त्राच्छन्नायां सम्भवतश्चम्पककाष्ठपीठिकायां वरं प्राङ्मुखमारोह्य स्वयं सम्मुखीभूय मध्ये पीतं पटं प्रसार्य बद्धाञ्जलिः स्वयमेवैतान् मन्त्रान् पठेत् (आचार्यं वा पाठयेत्) -

**ॐ नमः श्रीपते नाथ नमस्तुभ्यमुमापते ।**

**गजवक्त्र नमस्तुभ्यं भारति त्वां नमाम्यहम् ॥**

**ॐ स्वस्ति नवग्रहाः स्वस्ति स्वस्ति नारायणः सदा ।**

**स्वस्ति सुरेश्वर इन्द्रो द्यौर्भूमिर्वायुः स्वस्तये ॥**

**ॐ स्वस्ति वैश्वानरः स्वस्ति विश्वेदेवाश्च स्वस्तये ।**

**स्वस्ति रुद्रः पिता स्वस्ति स्वस्तिकर्ता महेश्वरः ॥**

**ॐ स्वस्ति वायुर्धनं स्वस्ति स्वस्तिदाता नृपः स्वयम् ।**

**स्वस्ति श्रीर्गणपतिश्चैव स्वस्ति श्रीर्माधवप्रिया ॥**

**ॐ प्रयतपाणिः शरणं प्रपद्ये स्वस्ति संबाधेष्वभयं नो वृद्धिः ॥**

**अथ वरं वृणीते श्रियः प्रयाणे सुखाय कल्याणं धर्मार्थकाममोक्षरतो देवाय दातव्यम् ।**

**अविरलसन्तानचिरजीविनं सुखाय विन्दानं सुतवर एवं कामान् यस्तु वरः ।**

**प्रियसावित्रीं गुणसंयुक्तां दोषरहितां बहुकुलनिर्मलसंयुक्ताम् ।**

**तुष्यन्ति देवता मातृगणो वरोऽभिषिक्ते दीर्घमायुः स्वस्तिब्रूता ब्रूहि ॥**

**आवाहयाम्यहं देवं सुन्दरं कामरूपिणम् ।**

**मम पापविनाशाय प्रजापतेति च क्रमात् ॥**

**ॐ प्रजापते नत्वदेतान्यन्यो विश्वारूपाणि परिता बभूव ।**

**यत्कामास्ते जुहुमस्तन्नोऽअस्तु वयꣳस्याम पतयो रयीणाम् ॥**

**हिमाचलो यथा देवं रुद्रमावाहयत् पुरा ।**

४. केचित्तु शिष्टाः वरागमनात्प्रागेव पुरोहितेन दीपकलशगणेशपूजनं कारयित्वा वरागमनं प्रतीक्षमाणास्तिष्ठन्ति, आगते च वरे यथास्थानं समानीय आचम्य दीपादिभ्यः पुष्पाञ्जलिमेव समर्प्य उत्तरं कर्म कुर्वन्ति । वरपूजनाङ्गभूतस्य दीपादिपूजनस्य पुरोहितेन, अङ्गभूतस्य वरपूजनस्य स्वेन करणं समुचितं न वेति कर्मकाण्डपारदर्शिनो विचारयन्तु सुधियः ।

**तथा भवन्तं प्रवरं वरमावाहयाम्यहम् ॥**

**ॐ नमस्ते रुद्र मन्यवऽउतोतऽइषवे नमः। बाहुभ्यामुत ते नमः॥**

**त्वं च ब्रह्मा त्वं च विष्णुस्त्वं च देवो महेश्वरः।**

**आगच्छन् दिव्यमूर्तिस्त्वं सर्वपापहरो भव॥**

**ॐ असङ्ख्याता सहस्राणि ये रुद्राऽअधिभूम्याम्। तेषाꣳसहस्रयोजने वधन्वानि तन्मसि॥**

**धर्मदं मोक्षदं चैव सर्वारिष्टविनाशनम्।**

**नारायणस्वरूपस्य पश्यामि वदनं तव॥**

**ॐ अथ व्वरं व्वृणीते बलवद्ध वै देवाऽएतस्य ग्रहस्य होमं प्रेप्सन्ति**

**तेऽस्माएतं वरꣳसमर्द्धयन्ति क्षिप्रे नऽइमं ग्रहं जुहवदिति तस्माद् वरं वृणीते॥ १॥**

**अथ वरं वृणीते यꣳह वै कं च सुषुवाणे वरं व्वृणीते सोऽस्मै सर्वः समृद्ध्यते तस्माद्वरं वृणीते॥२॥**

**अथ वाराह्याऽउपानहाऽउपमुञ्चते अग्नौ ह वै देवा घृतकुम्भं प्रवेशयाञ्चक्रुस्ततो वराहः सम्बभूव तस्माद्वराहो मेदुरो घृताद्धि सम्भूतस्तस्माद्वराहे गावः सञ्जानते स्वमेवैतद्र-समभिसञ्जानते।**

**तत्पशूनामेवैतद्रसे प्रतितिष्ठति तस्माद्वाराह्याऽउपानहाऽउपमुञ्चते॥ ३॥**

**स आजगाम गौतमो यत्र प्रवाहणस्य जैवलेरास, तस्मा आसनमाहृत्योदकमाहारयाञ्चकाराथ हास्माऽअर्घं चकार तंꣳहोवाच वरं भवते गौतमाय दद्म इति॥ ४॥**

**स होवाच प्रतिज्ञातो मऽएष व्वरो यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति॥ ५॥**

**स होवाच देवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति॥ ६॥**

**स होवाच विज्ञायते हास्ति हिरण्यस्योपात्तं गोऽश्वानां दासीनां प्रवाराणां परिधानानां मा नो भवान् बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूदिति, स वै गौतम तीर्थे नेच्छासा इति॥**

**उपैम्यहं भगवन्तमिति, व्वाचा ह स्मैव पूर्वऽउपयन्ति सहोवायनकीर्ताऽउवाच॥ ७॥**

**ॐ असौ यस्ताम्रोऽअरुणऽउतबब्भ्रुः सुमङ्गलः।**

**ये चैनꣳरुद्राऽअभितो दिक्षु श्रिताः सहस्रशो वैषाꣳहेडऽईमहे॥**

ततः पीतपटमपसार्य कन्याप्रदो ब्रूयात् – **ॐ अर्चयिष्यामो भवन्तम्** इति।

वरः प्रतिब्रूयात् – **ॐ अर्चय** इति।

ततो वरं[५] त्रिः परिक्रमणम् –

**ॐ यानि कानि च पापानि ब्रह्महत्यासमानि च ।**

**तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे** ॥ इति ।

अञ्जलिं बद्ध्वा वरं प्रार्थयेत् –

**ॐ आगतोऽसि वरश्रेष्ठ सर्वकामार्थसिद्धये ।**

**प्रतिग्रहसमर्थोऽसि[६] अर्घं गृहण नमोऽस्तु ते** ॥ इति ।

**गृह्णामि** इति वरेणोक्ते तदञ्जलौ क्रमेण –

विष्टरम्, चन्दनम्, अक्षतान्, विविधानि पुष्पाणि, जाति-चम्पक-आम्र-अश्वत्थ-वट-उदुम्बर-पल्लवान्, पञ्चरत्नानि, गङ्गोदकम्, यवान्, कर्पूरम्, पूगीफलम्, ताम्बूलम्, दूर्वाङ्कुरान्, सर्षपान्, लाजान्, नारिकेलफलम्, सुगन्धि-द्रव्यम्, द्रव्यं च समर्प्य दधि-मधु-घृत-पुष्पाक्षत-गङ्गोदक-कुशखण्डसहितं शङ्खरूपमर्घ्यपात्रं हस्ताभ्यामादाय वरस्य नाभौ, हस्तयोः, हृदि, स्कन्धे, शिरसि, पादयोः, जानुनोः, उदरे, चाऽर्घ्यं दत्वा चन्दनाक्षतमाल्यैर्वरं पूजयेत् -

**ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**

**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः** ॥

ततः वरणसामग्रीं गन्धाक्षतपुष्पपूगीफलस्वर्णद्रव्ययज्ञोपवीतताम्बूलपादुकोपानहपुष्पमालोष्णीषधौतान्तरीयोत्तरीयकुण्डलाङ्गदग्रैवेयक (कण्ठिका) (मुद्रिकादिकां) हस्ताभ्यां गृहीत्वा[७] – **एभिर्यथाशक्त्युपकल्पितैर्गन्धाक्षतपुष्पपूगीफलद्रव्ययज्ञोपवीतादिभिर्द्रव्यैः करिष्यमाण-कन्यादानप्रतिग्रहार्थं .....गोत्रम् ......प्रवरम् ......वेदाध्यायिनम् ......शाखिनम् ......शर्माणं कन्यार्थिनं त्वामहं वरत्वेन वृणे ।**

इत्युक्त्वा वरहस्तयोः समर्पयेत् । वरश्च '**वृतोऽस्मि**' इति प्रतिब्रुवन् ।

तत्सर्वं स्वीकुर्यात्, यथायोग्यं मुद्रिकोत्तरीयादिकं परिदध्याच्च । ततो वरः पुष्पादिकमादाय–

**ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूरऽइषव्योतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य व्वीरो जायतान्निकामे**

---

५. त्रिः परिक्रमणं च सपञ्चपल्लवं दूर्वापुञ्जात् (झारी करुवा) मुखाज्जलं स्रावयता कार्यमिति शिष्टाः ।

६. अर्घशब्दोऽत्र पूजोपचारद्रव्यपरः, न तु पूजनोपचाराङ्गीभूतार्घोपचारपरः । गृह्णामीति प्रतिवचनानन्तरं विष्टर-चन्दनाक्षतादीनां दानस्य पद्धतौ दर्शनात् ।

७. केचित्तु विनैव वचनं वरणसामग्रीं समर्पयन्ति । वरणीकर्मणि प्रवृत्तानां वरणवचनपरित्यागो नोचितः ।

**निकामे नः पर्जन्यो व्वर्षतु फलवत्यो नऽओषधयः पच्यन्ताँ योगक्षेमो नः कल्पताम्** ।

इति पठित्वा कन्यापित्रे आशीः प्रसादं समर्पयेत् ।

ततः कन्यापिता वरस्य दक्षहस्ताङ्गुष्ठं गृहीत्वा –

**ॐ दूरदेशागतो भद्र शान्तिक प्रियदर्शन** ।

**कालक्षेपो न कर्तव्यो लग्नवेला प्रवर्तते** ॥ इति पठित्वा तं पीठादुत्तारयेत् ।

ततश्च वरं यानमारोह्य जनवासं (वारयात्रिकजनस्थानं) प्रापय्य यथासुखं विश्रामयेत् । ततश्च सवरान् वारयात्रिकान् यथोत्साहं यथावैभवं सत्कुर्यात् ।[८]

॥ इति वरणीविधिः ॥

## ५. अथ कन्यादानविधिः

### (क) वरार्चनम्

अथ कन्याप्रदः कृतवरणीकृत्यः यथासमयं [९] शुक्लाम्बरधरः शुचिः प्रक्षालितपाणिपादः समाहितचेताः सपत्नीकः प्रत्यङ्मुख उपविश्य प्राङ्मुखं निविष्टम् ऊद्ध्र्वजानुं वरं संबोध्य–

ॐ साधु भवानास्तामित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः यजुर्ब्रह्मा देवता वरार्चने विनियोगः ।

**ॐ साधु भवानास्ताम्, अर्चयिष्यामो भवन्तम्** इति ब्रूयात् ।

वरश्च – **ॐ अर्चय** इति प्रतिब्रूयात् ।

---

८. वारयात्रिकैः सह भोक्तुमाहूतो वरः स्वं कलशं दधिमन्थनीं (ठेकीपदाभिधेयां स्वानीतां पात्रीं) च पुरस्कृत्य गच्छेत् । कलशवाहिन्या अनुमतिं प्राप्य च भुञ्जीत, इति प्राचीन आचारः ।

९. अस्मिन् समये वरस्य चरणप्रक्षालनं कृत्वा गृहीतं वरचरणाङ्गुष्ठं नोज्झन्ति सहसा पारितोषिकाधिक्ये महिलाः सत्यो दासजातीया महिलाः । अयमाचार वरस्य होमवेदीसमीपगमनसमये कार्य इति केचन कर्मकाण्डिनः प्राहुः । यथासम्प्रदायं व्यवस्था बोध्या ।

पुरातनीं रीतिमनुरुन्धानाः सनातनधर्मानुयायिनः सज्जनाः लग्नसाधनाय यथासमयं (भास्करबिम्बस्य अर्द्धोदयसमये अर्धास्तसमये वा) घटीयन्त्रं स्थापयन्ति । तत्प्रकारश्च-

प्राक्प्रवणायाम् उदक्प्रवणायां वा गोमयोपलिप्तायां निर्वातायां भूम्यां धान्योपरि स्वच्छं ताम्रमयं मृण्मयं वा पात्रं निधाय वस्त्रपूतेन जलेन तत् प्रपूर्य घटीयन्त्रं मध्यतः स्थापयित्वा चन्दनाक्षतपुष्पादिभिः प्रान्ततः पूजयित्वा - **मुख्यं त्वमसि यन्त्राणां ब्रह्मणा निर्मिता पुरा** । **भावाभावाय दम्पत्योः कालसाधनकारणम्** इत्यभिमन्त्रयेत् । ततः तन्निरीक्षणाय साधुशीलं ज्योतिर्विदं नियुञ्जीत इति । रीतिरियं करकलितघटीयन्त्रैः सभ्यैः सम्प्रति नानुरुध्यते ।

**विष्टरो विष्टरो विष्टरः**[१०] इति कन्यापक्षीया ब्रूयुः ।

**ॐ विष्टरः प्रतिगृह्यताम्** इति कन्याप्रदोक्ते –

वरः- **ॐ विष्टरं प्रतिगृह्णामि** इत्युक्त्वा विष्टरं प्रतिगृह्य-

ॐ वर्ष्मोस्मीत्याथर्वण ऋषिः, अनुष्टुप् छन्दः विष्टरो देवता आत्मस्तुतिपूर्वकोपवेशने विनियोगः।

**ॐ वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः ।**

**इमं तमभितिष्ठामि यो मा कश्चाभिदासति ॥**

इति पठन् उत्तराग्रं विष्टरं स्वासनाधः स्थापयेत् ।

ततः **पाद्यम्- पाद्यम्- पाद्यम्** इति कन्यापक्षीयैरुक्ते कन्याप्रदः अञ्जलौ पाद्यं कृत्वा वदेत् –

**ॐ पाद्यं प्रतिगृह्यताम्** इति ।

वरः **ॐ पाद्यं प्रतिगृह्णामि** इत्युक्त्वा दातुरञ्जलेः पाद्यं निजाञ्जलौ प्रतिगृह्य आचामेत् ।

## (ख) पादप्रक्षालनम्

तत्रादौ वरस्य –

कन्याप्रदः कुशादीन्यादाय –

ॐ विराजोदोहोसीति प्रजापतिर्ऋषिरापोदेवता यजुश्छन्दः पादप्रक्षालने विनियोगः ।

**ॐ विराजोदोहोसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः ॥**

इति मन्त्रेण दक्षिणं पादं प्रक्षाल्य मन्त्रावृत्त्या वामं प्रक्षालयेत् । (क्षत्रियादिर्वरश्चेत् पूर्वं वामं पादं प्रक्षाल्य दक्षिणं पश्चात् प्रक्षालयेत्)

१०. आदरातिशयबोधनायेयं त्रिरुक्तिः, अतश्च वरमादरीतुं प्रवृत्ताः कन्यापक्षीया एव इत्थं ब्रूयुः नान्ये जनाः । आदरातिशयबोधनाय ससम्भ्रमोक्तौ त्रिरुक्तिश्च सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः ।

ततः कन्यायाः पादप्रक्षालनम् –

कन्यायास्तु सर्ववर्णानां प्रथमं वामं पादं प्रक्षालनीयम् । तत्र मन्त्रः-

**ॐ का धेनुः कस्य को वत्सः का धेनुः कस्य दोहकः ।**

**कस्य धेनुर्विराजस्य किन्नामा कस्य दोहकः**

**धर्म दुग्धं द्विजो धेनुः कन्या वत्सकमेव च ।**

**कन्यापाद विराजश्च यजमानश्च दोहकः ॥**

## (ग) अर्घग्रहणम्

ततः **अर्घोऽर्घोऽर्घः** इति कन्यापक्षीयैरुक्ते दूर्वाक्षतचन्दनजलादिपूर्णं शङ्खार्घपात्रं हस्ताभ्यामादाय कन्याप्रदः **ॐ अर्घः प्रतिगृह्यताम्** इति वदेत् ।

वरः **ॐ अर्घं प्रतिगृह्णामि** इत्युक्त्वा कुशादीन्यादाय –

ॐ आपः स्थेति प्रजापतिर्ऋषिरापोदेवता यजुश्छन्द अर्घग्रहणे विनियोगः ।

**ॐ आपः स्थ युष्माभिः सर्वान् कामानवाप्तवान्** इति पठन् [११] अर्घं गृहीत्वा किञ्चित् पुष्पादिकं शिरसि धृत्वा विनियोजयेत् –

ॐ समुद्रं व इत्याथर्वण ऋषिः अनुष्टुप् छन्दः समुद्रो देवता अर्घाभिमन्त्रणे विनियोगः ।

**ॐ समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत ।**

**अरिष्टाऽअस्माकं वीरा मा परासेचि मत्पयः ॥**

इति पठन् तदर्घपात्रम् ऐशान्यां दिशि असञ्चरे (जनगतागतवर्जिते अघचनाम्नि प्रदेशे) स्थापयेत् । ततः **आचमनीयम् आचमनीयम् आचमनीयम्** इति कन्यापक्षीयैरुक्ते आचमनीयमादाय कन्याप्रदः **ॐ आचमनीयं प्रतिगृह्यताम्** इति वदेत् ।

वरः **ॐ आचमनीयं प्रतिगृह्णामि** इत्युक्त्वा[१२] ब्राह्मे तीर्थे आचमनीयं धृत्वा कुशादीन्यादाय–

ॐ आमागन्निति परमेष्ठी ऋषिः आपो देवता बृहतीच्छन्दः आचमने विनियोगः ।

---

११. मन्त्रपाठान्तेऽर्घग्रहणं गदाधरादिसम्मतम् अर्घग्रहणानन्तरं ग्रहणविनियोगपूर्वकमर्घग्रहणे मूलं नोपलभ्यते ।

१२. अङ्गुष्ठमूलप्रदेशो ब्राह्मं तीर्थमुच्यते । अङ्गुष्ठमूलस्य तलं ब्राह्मं तीर्थं प्रचक्षते, इति स्मृतेः ।

**ॐ आमागन् यशसा सꣳसृज व्वर्चसा ।**

**तम्मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम् ॥**

इति सकृदाचम्य द्विवारं तूष्णीमाचामेत् ।

## (घ) मधुपर्कः

ततः **मधुपर्को मधुपर्को मधुपर्कः** इति कन्यापक्षीयैरुक्ते मधुपर्कं हस्ताभ्यां धृत्वा कन्याप्रदः-

**ॐ मधुपर्कः प्रतिगृह्यताम्** इति वदेत् ।

वरः- **ॐ मधुपर्कं प्रतिगृह्णामि** इत्युक्त्वा विनियोजयेत् –

ॐ मित्रस्य त्वेति बृहस्पतिर्ऋषिः मधुपर्को देवता यजुश्छन्दो मधुपर्कावेक्षणे विनियोगः ।

**ॐ मित्रस्य त्वा चक्षुषा समीक्षे ।**

इति तत्क्षणदूरीकृतपिधानपात्रं कन्याप्रदकरस्थं मधुपर्कम् अवेक्ष्य गृह्णीयात् –

ॐ देवस्यत्वेति परमेष्ठी ऋषिर्गायत्रीच्छन्दः सविता देवता मधुपर्कग्रहणे विनियोगः ।

**ॐ देवस्यत्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।**

**अग्नये जुष्टङ्गृह्णाम्यग्नीषोमाभ्याञ्जुष्टङ्गृह्णामि** । इति मधुपर्कं प्रतिगृह्य,

वामहस्तेन धृत्वा दक्षहस्तस्याऽनामिकया त्रिरालोडयेत् –

ॐ नमः श्यावेति प्रजापतिर्ऋषिः सविता देवता यजुश्छन्दो मधुपर्कालोडने विनियोगः ।

**ॐ नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामि ।**

ततोऽनामिकाऽङ्गुष्ठाभ्यां भूमौ त्रिर्निरुक्ष्य मन्त्रावृत्त्या त्रिः प्राशयेत् –

ॐ यन्मधुन इति कुत्स ऋषिर्मधुपर्को देवता जगतीच्छन्दो मधुपर्कप्राशने विनियोगः ।

**ॐ यन्मधुनो मधव्यं परमꣳरूपमन्नाद्यम् ।**

**तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योन्नादोसानि** ॥

इति प्राश्य शेषमसञ्चरे निदध्यात् ।

## (ङ) अङ्गालम्भनम्

आचम्य कुशादीन्यादाय –

ॐ वाङ्म इत्यादीनां सप्तानां परमेष्ठी ऋषिः दैवीगायत्रीच्छन्दः परमात्मा देवता प्राणोपस्पर्शने विनियोगः ।

**ॐ वाङ्म आस्येऽस्तु** (इति दक्षिणकराग्रेण मुखम्)

**ॐ नसोर्मे प्राणोऽस्तु** (इति तर्जन्यङ्गुष्ठाभ्यां युगपन्नासिकारन्ध्रद्वयम्)

**ॐ अक्ष्णोर्मे चक्षुरस्तु** (इति अनामिकाङ्गुष्ठाभ्यां युगपच्चक्षुर्द्वयम्)

**ॐ कर्णयोर्मे श्रोत्रमस्तु** (इति मन्त्रावृत्त्या मध्यमाङ्गुष्ठाभ्यां क्रमशः दक्षिणवामौ कर्णौ)

**ॐ बाह्वोर्मे बलमस्तु** (इति करद्वयाग्राभ्यां परस्परं बाहू)

**ॐ ऊर्वोर्मे ओजोऽस्तु** (इति करतलाभ्यां युगपदूरुद्वयम्)

**ॐ अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु** (इति शिरःप्रभृति पादान्तानि अङ्गानि व्यस्ताभ्यां हस्ताभ्याम् आलभेत् (स्पृशेत्) । ततस्त्रिराचामेत् ।

## (च) गोरभिमन्त्रणम्

**गौर्गौर्गौः** इति कन्यापक्षीयैरुक्ते गोप्रतिनिधित्वेन कुशं गृहीत्वा कन्याप्रदः-

**ॐ गौर्गृह्यताम्** इति वदेत् ।

वरः- **ॐ गृह्णामि** इत्युक्त्वा कुशं गृहीत्वा विनियोजयेत् –

ॐ माता रुद्राणामिति वसिष्ठ ऋषिः गौर्देवता त्रिष्टुप् छन्दः गोरभिमन्त्रणे विनियोगः ।

**ॐ माता रुद्राणां दुहिता वसूनाꣳस्वसादित्यानाममृतस्य नाभिः ।**

**प्रणुवोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट** ॥

**मम ......शर्म्मणः (कन्याप्रदस्य) च पाप्मा हत, उत्सृजत, तृणान्यत्तु** ॥

इत्युच्चार्य कुशं नखाग्रेण छिन्द्यात् ।

## (छ) अग्निस्थापनम् पूजनञ्च

केशतुषशर्करादिरहितां गोमयोपलिप्तां होमवेदीं कुशैः परिसमूह्य तान् ऐशान्यां परित्यज्य गोमयोदकेन त्रिरुपलिप्य स्फचेन स्रुवमूलेन वा प्रागग्रतया प्रादेशमितं प्रदेशम् उत्तरोत्तरक्रमेण त्रिरुल्लिख्य, उल्लेखनक्रमेण दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां यथोल्लिखिताभ्यो रेखाभ्यस्त्रिः पांसूनुद्धृत्य कर्मपात्रजलेनाभ्युक्ष्य तूष्णीं कांस्यपात्रस्थमग्निं योजकनामानं प्रत्यङ्मुखं मध्यतः समाधाय तं प्रज्ज्वाल्य तद्रक्षार्थं कञ्चन ब्राह्मणं नियुञ्जीत ॥[१३]

## (ज) कन्यायै वस्त्रदानम्

ततः कौतुकागारात् कन्यायाम् आनीतायां वरः कन्यायै प्रदेयं अन्तरीयं वस्त्रं गृहीत्वा –

ॐ जरां गच्छेति प्रजापतिर्ऋषिर्वासो देवता त्रिष्टुप् छन्दो वस्त्रपरिधापने विनियोगः ।

**ॐ जरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा ।**

**शतञ्च जीव शरदः सुवर्चा रयिञ्च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वासः ॥**

इति पठित्वा कन्याहस्तयोर्दद्यात् ।

तत उत्तरीयं वस्त्रं गृहीत्वा –

ॐ या अकृन्तन्निति प्रजापतिर्ऋषिर्वासो देवता जगतीच्छन्द उत्तरीयपरिधापने विनियोगः ।

**ॐ याऽअकृन्तन्नवयं याऽअतन्वत याश्च देवीस्तन्तूनभितो ततन्थ ।**

**तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः ।**

इति पठित्वा कन्यायै दत्त्वा सौभाग्याभरणतया प्रसिद्धानि ललन्तिकादीनि (तिलहरी, नत्थ, पोते पदवाच्यानि) भूषणानि वरः स्वयं तूष्णीं परिधापयेत् । शृङ्गारसामग्रीं च दद्यात् ।

ततः कन्याप्रदो वराय अन्तरीयं (धोतीप्रभृति नामकं) दद्यात् । तद् गृह्णन् वरः –

ॐ परिधास्या इति आथर्वणऋषिर्लिङ्गोक्ता देवता पङ्क्तिश्छन्दः अन्तरीयपरिधाने विनियोगः।

**ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि ।**

---

१३. केचन कन्यापितरः समयानुरोधेन अत्रैवाऽवसरे चतुरो ब्राह्मणान् वृत्त्वाऽग्निस्थापनपद्धतिरीत्या कुशकण्डिकादिकं पञ्चवारुण्यादिहोमं चतुःस्वत्यन्तं कृत्वा वैवाहिकहोमपर्यन्तं कारयन्ति । केचन समञ्जनानन्तरमपि पूर्वोक्तं कर्म कारयन्ति । उभयत्राऽपि शिष्टाचारादृते नान्यत्प्रमाणमुपलभ्यते, सूत्राऽनाम्नातत्वात्पञ्चवारुण्यादिहोमकर्मकलापस्य ।

**शतञ्च जीवामि शरदः पुरुचीरायस्पोषमभिसंव्ययिष्ये** ॥ इति पठेत्

कन्याप्रदः सकाशाद् राङ्कवादिकं दोसल्लाख्योर्णवस्त्रप्रभृति उत्तरीयं गृह्णन् वरः –

ॐ यशसा मेत्याथर्वणऋषिर्लिङ्गोक्ता देवता त्रिष्टुप् छन्दः उत्तरीयपरिधाने विनियोगः ।

**ॐ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती ।**

**यशो भगश्च मा विदद्यशो मा प्रतिपद्यताम्** ॥ इति पठेत्

ततः कन्याप्रदो वराय अन्यानि यथाशक्ति सज्जीकृतानि परिधानीयानि वस्त्राणि भूषणानि च तूष्णीं दद्यात् । वरश्च यथोचितं परिदध्यात् । ततः कन्या वरश्च द्विराचामेत् ।

## (झ) समञ्जनम्

ततः कन्याप्रदः **परस्परं समञ्जेथाम्** इति प्रैषमुच्चार्य कन्यावरौ सम्मुखौ कुर्यात् ।

वरः कन्यां पश्यन् -

ॐ समञ्जन्तु इत्याथर्वण ऋषिर्लिङ्गोक्ता देवता अनुष्टुप् छन्दः समञ्जने विनियोगः ।

**ॐ समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ ।**

**सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नौ** ॥ इति पठेत् ।

## (ञ) ग्रन्थिबन्धनम्

कन्याप्रदपक्षीयः कोऽपि ब्राह्मणो लग्नशुद्धये साक्षतदूर्वापूगीफलद्रव्यैर्वस्त्रग्रन्थिबन्धनं [१४] कुर्यात् । कन्याप्रदश्च चरणप्रक्षालनपूर्वं गन्धमाल्यादिना कन्यां वरं च सम्पूज्य धूपदीपौ कारयेत् । अत्रैवाऽवसरे इतरेऽपि कन्यापक्षीयाश्चरणौ प्रक्षालयन्ति कन्यावरयोः ।

## (ट) लग्नगोदानम्

ततो वरं प्राङ्मुखं, कन्यां प्रत्यङ्मुखीं कृत्वा स्थानसौविध्येन वा कन्याप्रदो वरस्य दक्षिणपार्श्वे उदङ्मुखः

---

१४. उभयपक्षीयं वस्त्रयुगलं प्रसार्य तन्मध्ये पूगीफलयुगलद्वयं, यज्ञोपवीतयुगलद्वयं, सम्भवत औचित्याच्च कन्यापक्षीयद्रव्यसमं वरपक्षीयद्रव्यं, सर्षपान्, कुङ्कुमाक्तान् अक्षतान्, हरिद्राखण्डद्वयं, दूर्वाङ्कुराँश्च निधाय समागतायां लग्नवेलायां दृढं ग्रन्थिं कृत्वा- **ॐ एतन्ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिन्तेन मामव** ॥ **ॐ भूर्भुवःस्वः अञ्चलग्रन्थे सुप्रतिष्ठितो भव** ॥ इति पठित्वा वधूवरयोर्मध्यकायतः तद्वस्त्रप्रान्तद्वयं निवेशयेत् । ग्रन्थिरयं चतुर्थीकर्मणोऽन्ते सद्यश्चतुर्थीकरणपक्षे बधूप्रवेशान्ते मोच्यते । उभयपक्षीयं तद्द्रव्यं च वधूर्गृहीते इत्याचारः ।

स्वदक्षिणपार्श्वस्थितया पत्न्या सहितः शुद्धासने उपविश्य बद्धशिखः शुचिः पवित्रपाणिराचम्य प्राणानायम्य लग्नशुद्धये लग्नगोदानं कुर्यात् ।[१५]

गां (गोनिष्क्रयीभूतं द्रव्यं वा) ब्राह्मणं च सम्पूज्य कुशादीन्यादाय –

**ॐ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य ......गोत्रः ......शर्मा/वर्मा/गुप्तः/दासः अहं ......राशेः अस्याः कन्याया विवाहलग्नात् निषिद्धे स्थाने स्थितानां ग्रहाणां दुष्टफलनिवृत्तिपूर्वकं शुभे स्थाने स्थितानां ग्रहाणां शुभफलाधिकतावाप्तये इमां गां (गोनिष्कयीभूतं द्रव्यं वा) ...... गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे** । स्वस्तीति प्रतिवचनम् ।

प्रार्थना – **ॐ कपिले सर्वदेवानाम्** .....

दानप्रतिष्ठा –

**ॐ अद्यकृतैतद् ग्रहप्रातिकूल्यसम्भाविताशुभफलनिवृत्तिपूर्वकं शुभफलावाप्तये कृतस्य गोनिष्क्रयीभूतद्रव्यदानकर्मणः साङ्गतासिद्धये इदं ......द्रव्यं ......दैवतं दानप्रतिष्ठात्त्वेन तुभ्यमहं सम्प्रददे** । इति दद्यात् ।

## (ठ) कन्यादानप्रतिज्ञा

कुशादीन्यादाय –

**ॐ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य ......गोत्रः ......प्रवरः ...... शर्मा / वर्मा / गुप्तः / दासः अहं समस्तपितॄणां निरतिशयानन्द-ब्रह्मलोकावाप्त्यादि-कन्यादानकल्पोक्तनिखिल- फलावाप्तये [१६] तथा**

---

१५. इदं लग्नगोदानं कन्यापक्षे वरपक्षे च कर्तव्यमिति शिष्टाः ।

१६. कन्यादानकल्पोक्तानि फलानि तु -

(क) महीदातुश्च गोदातुः कन्यादातुश्च ये तथा । कन्यादानानुगाः पश्चात् समं यान्ति त्रयो रथाः ॥
अयाचितप्रदातुश्च सत्यवादिन एव च । नित्यं स्वाध्यायशीलस्य समं यान्ति त्रयो रथाः ।
(ऋष्यश्रृङ्गः)

(ख) श्रुत्वा कन्याप्रदानं तु पितरः सपितामहाः । मुक्ता वै सर्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते ॥

(ग) कन्यां ये तु प्रयच्छन्ति यथाशक्ति स्वलङ्कृताम् । ब्रह्मदेयां द्विजश्रेष्ठ ब्रह्मलोकं व्रजन्ति ते ॥
तिलराशिः कृतो यावद्दिवाकरसमुच्छ्रतः । वर्षान्ते गृह्यते तस्य तिलो राशेस्तु यावता ॥
संक्षयं लभते तावद् ब्रह्मलोकोऽस्य निश्चितः । (वह्निपुराणम्)

मनुयाज्ञवल्क्यादिवचनानुरोधेन- “दश पूर्वान् दश परान् आत्मना सैकविंशान् पुरुषान्” इति ।

आश्वलायनसूत्रानुरोधेन- “अलङ्कृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः, तस्या जातो द्वादशाऽवरान् द्वादशपरान् पुनात्युभयतः” इति ।

**वरेणानेन कन्यायामस्याम् उत्पादयिष्यमाणया सन्तत्या द्वादशपरान् द्वादशावरान् आत्मना सपञ्चविंशान् पुरुषान् पवित्रीकर्तुं श्रीमल्लक्ष्मीनारायणप्रीतये ब्राह्मेण विवाहविधिना यथाशक्त्यलङ्कृतायाः कन्यायाः प्रदानं करिष्ये** । इत्युत्सृजेत् ।

कृताञ्जलिः –

**ॐ दाताहं वरुणो राजा द्रव्यमादित्यदैवतम्** ।

**वरोऽसौ विष्णुरूपेण प्रतिगृह्णात्वयं विधिः** ॥ इति च पठेत् ।

## (ङ) प्रार्थना

**ॐ श्रीमन्महागणाधिपतये नमः । श्रीमन्मङ्गलमूर्त्तये नमः । श्रीगुरवे नमः । श्रीसरस्वत्यै नमः । श्रीवेदपुरुषाय नमः । इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः । ग्रामदेवताभ्यो नमः । स्थानदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । एतत्कर्मप्रधानदेवताभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः । अविघ्नमस्तु** ।

**ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः** ।

**लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः** ॥१॥ **(विनायकः) इति पाठान्तरम्** ।

**धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः** ।

**द्वादशैतानि नामानि यः पठेच्छृणुयादपि** ॥२॥

**विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा** ॥

**सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते** ॥३॥

**शुक्लाम्बरधरं देवं शशिवर्णं चर्तुर्भुजम्** ।

**प्रसन्नवदनं ध्यायेत्सर्वकामार्थसिद्धये** ॥४॥

**अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः** ।

**सर्वविघ्नहरस्तस्मै गणाधिपतये नमः** ॥५॥

**सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके** ।

**शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते** ॥६॥

**वक्रतुण्ड महाकाय कोटिसूर्यसमप्रभ** ।

अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥७॥

वागीशाद्या सुमनसः सर्वार्थानामुपक्रमे ।

यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥८॥

गणनाथं नमस्कृत्य नमस्कृत्य पितामहम् ।

विष्णुं रुद्रं श्रियं देवीं वन्दे भक्त्या सरस्वतीम् ॥९॥

स्थानं क्षेत्रं नमस्कृत्य दीनानाथं निशाकरम् ।

धरणीगर्भसम्भूतं शशिपुत्रं बृहस्पतिम् ॥१०॥

दैत्याचार्यं नमस्कृत्य सूर्यपुत्रं शनैश्चरम् ।

राहुं केतुं नमस्कृत्य यज्ञारम्भे विशेषतः ॥११॥

शक्रादिदेवताः सर्वा ऋषींश्चैव तपोधनान् ।

गर्गं मुनिं नमस्कृत्य नारदं पर्वतं तथा ॥१२॥

वशिष्ठं मुनिशार्दूलं विश्वामित्रं च गोभिलम् ।

अगस्त्यं च पुलस्त्यं च दशमित्रं पराशरम् ॥१३॥

भरद्वाजं च माण्डव्यं याज्ञवल्क्यं च गालवम् ।

अन्ये विप्रास्तपोयुक्ता वेदशास्त्रविचक्षणाः ॥१४॥

तान्सर्वान्प्रणिपत्याहं शुभकर्म समारभे ।

लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।

येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥१५॥

अग्रतः श्रीनृसिंहश्च पृष्ठतो देवकीसुतः ।

रक्षतां पार्श्वयोर्देवौ भ्रातरौ रामलक्ष्मणौ ॥१६॥

## (ढ) कन्यादानसङ्कल्पः [१७, १८]

तत उत्त्थाय पूर्वमुखस्य वरस्य दक्षिणपाणितलस्योपरि कन्यायाः दक्षिणं पाणिं निधाय, शङ्खस्थदूर्वाक्षतकुशजलादीनि कन्याङ्गुष्ठं च गृहीत्वाऽधस्तात् पात्रं निधाय भृङ्गारेण (झारी-करुवा नामपात्रेण) जलधारां प्रवर्तयन्त्यां दक्षिणस्थायां स्वपत्न्याम् आचार्यः सङ्कल्पं पठेत् –

**ॐ स्वस्ति श्रीमुकुन्दसच्चिदानन्दस्य ब्रह्मणोऽनिर्वाच्यमायाशक्तिविजृम्भिताविद्यायोगात् कालकर्मस्वभावाविर्भूतमहत्तत्त्वोदिताहङ्कारोद्भूत-वियदादिपञ्चमहाभूतेन्द्रियदेवतानिर्मितेऽण्ड-कटाहे चतुर्दशलोकात्मके लीलया तन्मध्यवर्तिनो भगवतः श्रीनारायणस्य नाभिकमलोद्भूत- सकललोकपितामहस्य ब्रह्मणः सृष्टिं कुर्वतस्तदुद्धरणाय प्रजापतिप्रार्थितस्य समस्त-जगदुत्पत्तिस्थितिलयकारणस्य जगद्रक्षाशिक्षाविचक्षणस्य प्रणतपारिजातस्य अच्युतानन्त-वीर्यस्य श्रीमद्भगवतो महापुरुषस्य, अचिन्त्यापरिमितशक्त्या ध्रियमाणस्य महाजलौघमध्ये परिभ्रममाणानाम् अनेककोटिब्रह्माण्डानाम् एकतमेऽव्यक्तमहदहङ्कारपृथिव्यप्तेजोवाय्वाकाशा- द्यावरणैरावृते, अस्मिन् महति ब्रह्माण्डखण्डे आधारशक्तिश्रीमदादिवाराहदंष्ट्राग्रविराजिते कूर्मानन्त-वासुकी-तक्षक-कुलिक-कर्कोटक-पद्म-महापद्म-शङ्खाद्यष्टमहानागैर्ध्रियमाणे, ऐरावत-पुण्डरीक-वामन-कुमुदाञ्जन-पुष्पदन्त-सार्वभौम-सुप्रतिकाष्टदिग्गजप्रतिष्ठितानाम्, अतल-वितल-सुतल-तलातल-रसातल-महातल-पाताललोकानाम् उपरिभागे भूर्लोक-भुवर्लोक-स्वर्लोक-महर्लोक-जनलोक-तपोलोक-सत्यलोकाख्यसप्तलोकानाम् अधोभागे, चक्रवाल-शैल-महावलय-नागमध्यवर्तिनो महाकालमहाफणिराजशेषस्य सहस्रफणानां मणिमण्डलमण्डिते**

---

१७. (क) सङ्कल्पवाक्ये रिक्तस्थानेषु यथायोग्यं पदं योजनीयम् । कोष्ठकान्तर्गतो भागः स्थानभेदे परिवर्तनीयः ।

(ख) शाखायाः वेदस्य च भिन्नत्वे एतत्पदं यथायोग्यं परिवर्तनीयम् ।

१८. **कन्यादाने सक्षिप्तसङ्कल्पः –**

ॐ हरिः तत्सत् ३, विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य सकलजगत्सृष्टिकारिणो ब्रह्मणो द्वितीये परार्धे श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वन्तरे प्रह्लादाधिपत्ये सत्यत्रेताद्वापरान्ते अष्टाविंशतितमे कलियुगे प्रथमचरणे बौद्धावतारे भारतवर्षे भरतखण्डे जम्बूद्वीपे (आर्यावर्तान्तर्गते हिमवत्पर्वतदक्षिणपार्श्वे वाग्वत्याः पश्चिमे तीरे पुण्यभूमौ पाशुपतक्षेत्रे विक्रमशके षष्टिसंवत्सराणां मध्ये ...... नाम्नि संवत्सरे श्रीसूर्ये ...... अयनगते ...... ऋतौ मासोत्तमे ...... मासे ...... पक्षे ...... राशिगते श्रीसूर्ये ...... राशिगते चन्द्रमसि ...... राशिगते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं ग्रहगुणयोगविशिष्टायां ...... वासरान्वितायां ...... तिथौ ...... गोत्रः ...... प्रवरो माध्यन्दिनशाखान्तर्गत-शुक्लयजुर्वेदाध्यायी ...... शर्मा सपत्नीकोऽहम् अमुक ...... गोत्रस्य ...... प्रवरस्य माध्यन्दिनशाखान्तर्गत-शुल्कयजुर्वेदाध्यायिनः ...... शर्मणः प्रपौत्राय, ...... गोत्रस्य ...... प्रवरस्य ...... वेदाध्यायिनः ...... शर्मणः पौत्राय, ...... गोत्रस्य ...... प्रवरस्य ...... वेदाध्यायिनः ...... शर्मणः पुत्राय, ...... गोत्रस्य ...... प्रवरस्य ...... वेदाध्यायिनः ...... शर्मणः प्रपौत्रीम्, ...... गोत्रस्य ...... प्रवरस्य ...... वेदाध्यायिनः ...... शर्मणः पौत्रीम्, ...... गोत्रस्य ...... प्रवरस्य ...... वेदाध्यायिनः ...... शर्मणः पुत्रीम्, (इत्येवं त्रिवारं पठित्वा) वरेणानेन कन्यायामस्याम् उत्पत्स्यमानया सन्तत्या द्वादशावरान् द्वादशपरान् आत्मना सपञ्चविंशान् पुरुषान् पवित्रीकर्तुं श्रीमल्लक्ष्मीनारायणप्रीतये ...... गोत्राय ...... प्रवराय ...... वेदाध्यायिने ...... शर्मणे नारायणस्वरूपाय कन्यार्थिने वराय, ...... गोत्रोत्पन्नाम् ...... नाम्नीम् इमां यथाशक्त्यलङ्कृतां प्रजापतिदैवतां श्रीरूपिणीं कन्यां देवद्विजाग्निसाक्षिकतया सहधर्माचरणाय पत्नीत्वेन तुभ्यं सम्प्रददे । प्रतिगृह्णातु भवान् ॥ इति कुशाक्षतजलादिसहितं कन्यादक्षिणपाण्यङ्गुष्ठं वरदक्षिणपाणौ दद्यात् । 'प्रजापतिः प्रीयताम्' इति च वदेत् ।

दिग्दन्तिशुण्डोत्तम्भिते, अमरावती-अशोकवती-भोगवती-सिद्धवती-गान्धर्ववती-काञ्च्यवत्यलकावती-यशोवतीति पुण्यपुरीप्रतिष्ठिते इन्द्राग्नि-यम- निर्ऋति-वरुण-वायु-कुबेरेशानाष्टदिक्पालप्रतिष्ठिते वरध्रुवाधर-सोमपा-प्रभञ्जनाऽनल-प्रत्यूष- प्रभाख्याष्टवसुभिर्विराजिते हरत्र्यम्बकरुद्र-मृगव्याधापराजित-कपालीभैरव-शम्भुकपर्दि-वृषाकपिवटुरूपाख्यैकादशरुद्रैः संशोभिते रुद्रोपेन्द्र-सवितृधातृ-त्वष्ट्र्यमेन्द्रेशान-भगमित्र-पूषाख्यद्वादशादित्यप्रकाशिते यमनियमाऽसन-प्राणायामप्रत्याहार-धारणाध्यान-समाध्यष्टाङ्ग- निरतवसिष्ठ-बालखिल्य-विश्वामित्र-दक्षकात्त्यायन-कौण्डिण्यगौतमाङ्गिरस-पाराशर्य्य-व्यास-वाल्मीकि-शुकशौनक-भरद्वाज-सनकसनन्द-सनातन-सनत्कुमार-नारदादिमुख्यमुनिभिः पवित्रिते लोकालोकाचलबलयिते लवणेक्षुरस-सुरासर्पि-दधिक्षीरोदकयुक्त-सप्तार्णवपरिवृते जम्बूप्लक्ष-शाल्मलि-कुशक्रौञ्च-शाकपुष्कराख्य-सप्तद्वीपयुते, इन्द्रकांस्य-ताम्रगभस्ति-नाग-सौम्य-गन्धर्व-चारण-भारतेति नवखण्डमण्डिते सुपर्णगिरि-कर्णिकोपेत-महासरोरुहाकार-पञ्चाशत्कोटियोजनविस्तीर्णे भूमण्डले, अयोध्या-मथुरा-माया-काशी-काञ्च्यवन्तिका-द्वारावतीति सप्तपुरीप्रतिष्ठिते महामुक्तिप्रदस्थले शालग्रामशम्भलनन्दिग्रामेति ग्रामत्रयविराजिते चम्पकारण्य-वदरिकारण्य-दण्डकारण्य-धर्मारण्य-पद्मारण्य-गुह्यारण्य-जम्बूकारण्य-विन्ध्यारण्य-द्राक्षारण्य-नहुषारण्य-काम्यकारण्य-द्वैतारण्य-नैमिषारण्यादीनां मध्ये सुमेरु-निषधकूट-शुभ्रकूट-श्रीकूट-हेमकूट-रजतकूट-चित्रकूट-त्रिकूट-किष्किन्ध-वेताद्रिकूट हिमविन्ध्याचलानां हरिवर्ष-किम्पुरुषवर्षयोश्च दक्षिणे नवसहस्रयोजनविस्तीर्णे भरतखण्डे मलयाचल-सह्याचल-विन्ध्याचलानामुत्तरेण स्वर्णप्रस्थ-चण्डप्रस्थ-सूक्तिक-आवन्तक-रमणक-महारमणक-पाञ्चजन्य-सिंहल-लङ्काऽशोकवत्यलकावती-सिद्धवती-गान्धर्ववत्यादि-पुण्यपुरीविराजिते नवखण्डोपद्वीपमण्डिते दक्षिणावस्थित-रेणुकाद्वय-शूकर-काशी-काञ्ची- कालिका-लवटेश्वर-कालञ्जर-महाकालेति नवोषरयुते द्वादशज्योतिर्लिङ्ग-गङ्गा(भागीरथी)- गोदावरी(गौतमी)-क्षिप्रा-यमुना-सरस्वती-नर्मदा-तापी-पयोष्णी-चन्द्रभागा-कावेरी-मन्दाकिनी-प्रवरा-कृष्णा-वेण्या-भीमरथी-तुङ्गभद्रा-मलापहा-कृतमाला-ताम्रपर्णी-विशालाक्षी-वञ्जुला-चर्मण्वती-वेत्रवती-भोगवती-विशोका-कौशिकी-गण्डकी-वाशिष्ठी-प्रमदा-विश्वामित्री-फल्गुनी-चित्रकाश्यपी-सरयू-सर्वपापहारिणी-करतोया-प्रणीता-वज्रा-वक्रगामिनी-सुवर्णरेखा-शोणा-भवनाशिनी-शीघ्रगा-कुशावर्त्तिनी-ब्रह्मानन्दा-महीतनयेत्यादिभिः अनेकपुण्यनदीभिर्विलसिते ब्रह्मपुत्रसिन्धुनदादिपरमपवित्रजलविराजिते हिमवन्मेरु-गोवर्धन-क्रौञ्च-चित्रकूट-हेमकूट-महेन्द्र-मलय-सह्येन्द्रकील-पारियात्राद्यनेकैः पर्वतैः समन्विते मतङ्ग-माल्य-किष्किन्ध-ऋष्यशृङ्गेति महानगसमन्विते अङ्गवङ्गकलिङ्ग-काश्मीरकाम्बोज-सौवीर-सौराष्ट्र-महाराष्ट्र-मगध-नेपाल-केरल-चोल-पाञ्चाल-गौड-मालव-मलय-सिंहल-द्रविड-कर्नाटक-ललाट-करहाट-वरहाट-पाण्डच-निषध-मागध-आन्ध्र-दशार्णव-भोज-कुरु-गान्धार-विदर्भ-विदेह-बाल्हीक-बर्बर-कैकेय-कोसल-विराट-शूरसेन-कोङ्कण-कैकट-मत्स्य-मद्र-पारसिक-खर्जूर-यवन-म्लेच्छ-जालन्धरेति सिद्धवत्यन्यदेशविशेष-भाषाभूमिपाल-विभूषिते, इलावृत-कुरुभद्राश्व-केतुमाल-किम्पुरुष-रमणक-हिरण्मयादि नववर्षाणां मध्ये भारतवर्षे भरतखण्डे वकुल-चम्पक-पाटलाब्ज-पुन्नाग-जाति-करवीर-रसाल-कल्हार-केतक्यादिनानाविध-कुसुमस्तवकविराजिते कोकन्त-हिरण्यशृङ्ग-कुब्जार्वुद-मणिकर्णी-वटशालाग्राम-शूकर-मथुरा-गया-निष्क्रमण-लोहार्गल-पोतस्वामि-प्रभास-वदरीति चतुर्दशगुह्यविलसिते जम्बूद्वीपे कुरुक्षेत्रादिसमभूमध्यरेखायाः पश्चिमदिग्भागे कुलमेरोर्दक्षिण-दिग्भागे विन्ध्याचलादुत्तरभागे श्रीशैलस्य वायव्यकोणे कृष्णावेण्ययोर्मध्यदेशे मत्स्य-कूर्म-वराह-नृसिंह-वामन-परशुराम-राम-कृष्ण-बुद्ध-कल्कीति दशावताराणां मध्ये बौद्धावतारे गङ्गादिसरिद्भिः पाविते, एवं

नवसहस्रयोजनविस्तीर्णे भारतवर्षे निखिलजनपावन-परमभागवतोत्तम-शौनकादिनिवासिते नैमिषारण्ये आर्यावर्तान्तर्गते ब्रह्मावर्तैकदेशे सूर्य्यान्वयभूभृत्प्रतिष्ठिते श्रीमन्नारायण-नाभिकमलोद्भूत-सकलजगत्स्रष्टुः परार्द्धद्वयजीविनो ब्रह्मणो द्वितीयपरार्धे एकपञ्चाशत्तमे वर्षे प्रथमे मासे प्रथमे पक्षे प्रथमे दिवसे अह्नो द्वितीये यामे तृतीये मुहूर्त्ते रथन्तरादि-द्वात्रिंशत्कल्पानां मध्ये अष्टमे श्वेतवाराहकल्पे स्वायम्भुवादि-मन्वन्तराणां मध्ये सप्तमे वैवस्वतमन्वन्तरे कृतत्रेताद्वापरकलिसंज्ञकानां चतुर्युगानां मध्ये वर्त्तमाने अष्टाविंशतितमे कलियुगे तस्य प्रथमचरणे श्रीमन्नृपविक्रमार्कात् शालिवाहनाद्वा यथासंख्यागमेन चान्द्र-सावन-सौरनक्षत्रादि-प्रकारेणागतानां प्रभवादि-षष्टिसंवत्सराणां मध्ये ...... नाम्नि सम्वत्सरे ...... उत्तरगोलावलम्बिनि श्रीमार्त्तण्डमण्डले ...... ऋतौ ...... मासे ...... पक्षे ...... तिथौ ...... वासरे ...... नक्षत्रे ...... योगे ...... करणे ...... राशिस्थिते चन्द्रमसि ...... राशिस्थिते सवितरि ...... राशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथास्थानस्थितेषु सत्सु एवं ग्रहगणविशेषेण विशिष्टायां शुभपुण्यतिथौ, अद्य ...... गोत्रस्य ...... प्रवरस्य शुक्लयजुर्वेदमाध्यन्दिनीय-वाजसनेयशाखाध्यायिनः ...... शर्मणः सभार्य्यस्य सपरिवारस्य कुम्टुम्बसहितस्य मम, इह जन्मनि जमान्तरे वा बाल्य-यौवन-वार्धक्यावस्थासु वाक्पाणि- पादपायूपस्थ-घ्राणरसना-चक्षुःस्पर्शन-श्रोत्रमनोभिश्चरित-ज्ञाताज्ञात-कामाकाम-महापातकोपपातकादि-सञ्चितानां पापानां ब्रह्महनन-सुरापान-सुवर्णस्तेय-गुरुतल्पगमन-तत्संसर्गरूपाणां पातकानां बुद्धिपूर्वकाणां मनोवाक्कायकृतानां बहुकालाभ्यस्तानाम् उपपातकानां च स्पृष्टास्पृष्ट-सङ्करीकरण-मलिनीकरण-अपात्रीकरण-जातिभ्रंशकरणा-विहिताकरण-कर्मलोपजनितानां रसविक्रय-कन्याविक्रय-हयविक्रय-गोविक्रय-खरोष्ट्रविक्रय-दासीविक्रय-अजादिपशुविक्रय-स्वगृहविक्रय-नीलीविक्रयाक्रेय-विक्रयपण्यविक्रय-जलचरादि-जन्तुविक्रय-स्थलचरादिविक्रय-खेचरादिविक्रय-सम्भूतानां निरर्थकवृक्षच्छेदन-ऋणानपाकरण-ब्रह्मस्वापहरण-देवस्वापहरण-राजस्वापहरण-परद्रव्यापहरण-तैलादिद्रव्यापहरण-फलादिहरण-लोहादिहरण-नानावस्तुहरणरूपाणां ब्राह्मणनिन्दा-गुरुनिन्दा-वेदनिन्दा-शास्त्रनिन्दा-परनिन्दा-अभक्ष्याभक्षण-अभोज्यभोजन-अचोष्यचोषण-अलेह्यलेहन-अपेयपान-अस्पृश्यस्पर्शन-अश्राव्यश्रवण-अहिंस्यहिंसन-अवन्द्यवन्दन-अचिन्त्यचिन्तन-अयाज्ययजन-अपूज्यपूजनरूपाणां मातृपितृतिरस्कार-स्त्रीपुरुषप्रीतिभेदन-परस्त्रीगमन-विधवागमन-वेश्यागमन-दासीगमन-चाण्डालादिहीनजातिगमन-गुदागमन-रजस्वलागमन-पश्वादिगमनरूपाणां कूटसाक्षित्ववाद-मिथ्यापवाद-म्लेच्छसम्भाषण-ब्रह्मद्वेषकरण- ब्रह्मवृत्तिच्छेदन-परवृत्तिहरणरूपाणां मित्रवञ्चन-गुरुवञ्चन- स्वामीवञ्चन-असत्यभाषण-गर्भपातन-पथिताम्बूलचर्वण-हीनजातिसेवन-परान्नभोजन-गणान्नभोजन-लशुनपलाण्डुगृञ्जनभक्षण-तालवृक्षफलभक्षण-उच्छिष्टभक्षण-मार्जारोच्छिष्टभक्षण-पर्युषितान्नभक्षणरूपाणां पङ्क्तिभेदकरण-भ्रूणहिंसा-बालहिंसाद्यनेक-हिंसोद्भूतानां शौचत्याग-स्नानत्याग-सन्ध्यात्यागौपासनाग्नित्याग-वैश्वदेवत्यागरूपाणां निषिद्धाचरण-कुग्रामवास-ब्रह्मद्रोह-पितृमातृद्रोह-परद्रोह-परनिन्दाऽत्मस्तुति-दुष्टप्रतिग्रह-दुर्जनसंसर्गरूपाणां गोयान-वृषभयान-महिषीयान-गर्दभयान-ऊष्ट्रयान-अजयान-भृत्याभरण-स्वग्रामत्याग-गोत्रत्याग-कुलत्याग-दूरस्थमन्त्रण-विप्राशाभेदनावन्दिताशीर्वादग्रहण-पतितसम्भाषणरूपाणां पतितजनपङ्क्तिभोजन-अहःसङ्गम-वृथामनोरथादिपापानां –

तथा च –

महापापोपपापाभ्यां नानायोनिषु यत्कृतम् ।

बालभावेन यत्पापं क्षुतृडर्थे च यत्कृतम् ॥

**आत्मार्थं चैव यत्पापं परार्थे चैव यत्कृतम् ।**

**तीर्थेषु चैव यत्पापं गुर्ववज्ञा कृतं च यत् ॥**

**रागद्वेषादिजनितं कामक्रोधेन यत्कृतम् ।**

**हिंसानिद्रादिजनितं भेददृष्ट्या च यन्मया ॥**

**देहाभिमानजं पापं सर्वदा यन्मया कृतम् ।**

**शुष्कमार्द्रं च यत्पापं महल्लघु च यद्भवेत् ॥**

**नाशमायातु तत्सर्वं महादानफलोदयात् ।**

**कन्यादानं महादानं दानानां चोत्तमोत्तमम् ॥**

**नाशमायान्ति पापानि कन्यादानाद्विशेषतः ॥**

**इत्यादीनां प्रकीर्णपातकानाम् एतत्कालपर्य्यन्तं सञ्चितानां स्थूलानां लघुसूक्ष्माणां च विशेषतः परिहारार्थं दशावरान् दशपरान् आत्मना सहितान्, एकविंशतिपुरुषान् उद्धर्त्तुं ब्रह्मलोकावधि पञ्चाशत्कोटियोजनविस्तीर्णे, अस्मिन् भूमण्डले सप्तर्षिमण्डल-पर्य्यन्तवालुकाभिः कृतराशेः वर्षसहस्रावसाने एकैकवालुका-पकर्षक्रमेण सर्वराश्यापकर्ष-सम्मितकालपर्य्यन्तं ब्रह्मलोक-ब्रह्मसायुज्यताप्राप्त्यर्थं तथा मम समस्तपितॄणाम् आत्मनश्च विष्ण्वादिलोकप्राप्तये** (अत्र वरस्य त्रिपुरुषोच्चारणं शाखोच्चारणं च) ...... **गोत्रस्य ...... प्रवरस्य माध्यन्दिनशाखान्तर्गतशुक्लयजुर्वेदाध्यायिनः ...... शर्मणः प्रपौत्राय, ...... गोत्रस्य ...... प्रवरस्य ...... वेदाध्यायिनः ...... शर्मणः पौत्राय, ...... गोत्रस्य ...... प्रवरस्य ...... वेदाध्यायिनः ...... शर्मणः पुत्राय** (अत्र कन्यायास्त्रिपुरुषोच्चारणं शाखोच्चारणं च) ...... **गोत्रस्य ...... प्रवरस्य ...... वेदाध्यायिनः ...... शर्मणः प्रपौत्रीम्, गोत्रस्य ...... प्रवरस्य ...... वेदाध्यायिनः ...... शर्मणः पौत्रीम्, ...... गोत्रस्य ...... प्रवरस्य ...... वेदाध्यायिनः ...... शर्मणः पुत्रीम्** (इत्येवं त्रिवारं पठित्वा) **वरेणानेन कन्यायामस्याम् उत्पत्स्यमानया सन्तत्या द्वादशावरान् द्वादशपरान् आत्मना सपञ्चविंशान् पुरुषान् पवित्रीकर्तुं श्रीमल्लक्ष्मीनारायणप्रीतये ...... गोत्राय ...... प्रवराय ...... वेदाध्यायिने ...... शर्मणे नारायणस्वरूपाय कन्यार्थिने वराय, ...... गोत्रोत्पन्नां ...... नाम्नीमिमां यथाशक्त्यलङ्कृतां प्रजापतिदैवतां श्रीरूपिणीं कन्यां देवद्विजाग्निसाक्षिकतया सहधर्माचरणाय पत्नीत्वेन तुभ्यं सम्प्रददे** । इति कुशाक्षतजलादिसहितं कन्याया दक्षिणपाण्यङ्गुष्ठं वरस्य दक्षिणपाणौ दद्यात् । अत्र दानकाले लग्नग्रन्थिबन्धनम्, सौभाग्य (लगनपोते) परिधापनञ्चेति शिष्टाचारः ।

वरः –

**ॐ स्वस्ति, प्रजापतये कन्यां प्रतिगृह्णामि ।**

ॐ द्यौस्त्वेति प्रजापतिर्ऋषिः त्रिष्टुप् छन्दः लिङ्गोक्ता देवता कन्याग्रहणे विनियोगः ।

**ॐ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु** । इति पठन् प्रतिगृह्णीयात् ।

केचित् कन्याहस्तेन वरो भूमिं स्पृशेदिति वदन्ति ।

## (ण) वरप्रार्थना

ततो वरमुद्दिश्य कृताञ्जलिः प्रार्थयेत् ।

ब्राह्मणः कन्याप्रदः – **गौरीं कन्यामिमां विप्र यथाशक्तिविभूषिताम् ।**
**ददामि विष्णवे तुभ्यं दत्तां विप्र समाश्रय ॥**

क्षत्रियादिः कन्याप्रदः – **कन्यां कनकसम्पन्नां कनकाभरणैर्युताम् ।**
**ददामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥**

## (त) कन्याप्रार्थना

कन्यामुद्दिश्य कृताञ्जलिः प्रार्थयेत् –

**कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः ।**
**कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥**

इति पठित्वा आसने उपविश्य दानप्रतिष्ठायै सकुशयवतिलजलं सुवर्णं तन्निष्क्रयीभूतं द्रव्यं वाऽऽदाय ।

## (थ) दानप्रतिष्ठा

**ॐ अद्यकृतैतत् कन्यादानसाङ्गतासिद्ध्यर्थम् दानप्रतिष्ठात्वेन इदं सुवर्णं वह्निदैवतं** (..... **द्रव्यं** ...... **दैवतं वा**) ...... **गोत्राय** ...... **शर्मणे वराय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । ॐ तत्सन्न मम** ॥ इत्युच्चार्य वराय दद्यात् ।

ततः कृताञ्जलिः वरं प्रार्थयेत् –

**कन्या**[१९] **मम कुले जाता पालिता वत्सराष्टकम्**[२०] ।
**तुभ्यमद्य मया दत्ता पुत्रपौत्रप्रवर्धिनी** ॥
**धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयम्** ॥ इति

वरः – **नातिचरामि** इति[२१] प्रतिज्ञां कुर्यात् ।

---

१९. कन्यायामष्टवर्षायां सत्यां गौरीं कन्यामिति, नववर्षायाम् रोहिण्याख्यामिमां कन्यामिति, दशवर्षायां कन्यकाख्यामिमां कन्यामिति, एकादशवर्षायां रुद्रवर्षामिमां कन्यामिति, ततः परस्तात् ।

२०. कन्यायाः वर्षाधिक्ये – पालिता नव हायनान्, पालिता दश हायनान्, पालिता रुद्र (११) हायनान् इत्यादिरूप ऊहः कर्तव्यः । न्यूनत्त्वे – पालिता सप्तवत्सरान् इति ।

२१. इयं प्रतिज्ञा प्रतिज्ञाभङ्गजनितनरकनिपातादिदोषप्रदर्शनविधायिनीषु सर्वासु स्मृतिषु सश्रद्धैः सज्जनैर्न विस्मरणीया । स्मरन्ति च यमादयः स्मृतिकाराः - बहिर्लोम्ना तु षण्मासान् वेष्टितः खरचर्मणा । दारातिक्रमणे भिक्षां देहीत्युक्त्वा विशुध्यति । (बृहत्संहिता)

## (द) वराय गोदानम्

कन्याप्रदो वराय गोमिथुनं (गाम् एव वा) दद्यात् । सोपस्कारां गामुपनीय सम्पूज्य कुशादीन्यादाय –

**ॐ पूर्वसङ्कल्पसिद्धिरस्तु** ...... **गोत्रः** ...... **शर्मा सपत्नीकोऽहं** ....... **अद्य कृतैतत् कन्यादानसाङ्गतासिद्धिद्वारा कन्यादानकल्पोक्तसकलफलावाप्तये यथोपपन्नालङ्कारसमन्वितां सवत्साम् इमां गां (गोमिथुनं वा)** .......... **गोत्राय** .......... **शर्मणे वराय तुभ्यं सम्प्रददे । ॐ तत्सन्न मम** ॥ इति दद्यात् ।

प्रार्थना – **ॐ कपिले सर्वदेवानाम्**.....

दानप्रतिष्ठा –

**ॐ अद्यकृतैतत् कृतस्य गोदानकर्मणः साङ्गतासिध्यर्थमिदं द्रव्यं** ...... **गोत्राय** ...... **शर्मणे वराय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे** ॥ इति पठित्वा दद्यात् ।

वरः- **ॐ स्वस्ति रुद्राय गां प्रतिगृह्णामि** इत्युक्त्वा प्रतिगृह्णीयात् ।[२२]

## (ध) भूयसीदक्षिणादानम्[२३]

कन्याप्रदो भूयसीं दक्षिणामुपनीय **ॐ देयद्रव्याय नमः** इति सम्पूज्य सकुशतिलयवजलं हस्तेनादाय –

**ॐ अद्येहेत्यादि पूर्वसङ्कल्पसिद्धिरस्तु** ...... **गोत्रः** ...... **शर्मा सपत्नीकोऽहं कृतस्य कन्यादानकर्मणः साङ्गतासिद्धिद्वारा श्रीलक्ष्मीनारायणप्रीतिपुरःसरं श्रुतिस्मृतिपुराणोक्त-सकलफलावाप्तये भूयसीं दक्षिणामिमां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्योऽन्येभ्यश्च विभज्य दातुम् उत्सृजे । ॐ तत्सन्न मम** ॥ इति उत्सृज्य यथार्हं दद्यात् ।

## (न) कन्यादात्रे तिलकम्

ततो गन्धपुष्पादीन्यादाय वरः सपत्नीकं कन्यापितरं तिलकपुष्पाभ्यामलङ्कुर्यात् –

**ॐ ब्राह्मणमद्य व्विदेयं पितृमन्तं पैतृमत्यमृषिमार्षेयꣳसुधातु दक्षिणम् । अस्मद्द्राता देवत्रा गच्छत प्रदातारमाविशत** ॥१॥

**ॐ अग्नये त्वा मह्यं व्वरुणो ददातु सोऽमृतत्वमशीयायुर्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रे रुद्राय त्वा मह्यं**

२२. क्षत्रियादयो वराश्च प्रतिगृहीतं गोमिथुनं (गां वा) सविधि सङ्कल्प्य स्वकीयाय पुरोहिताय प्रयच्छन्ति ।

२३. अस्मिन्नवसरे कन्यायाः पित्रादयो यथाशक्ति कन्यायै यौतकं (दाइजो पदवाच्यं) वस्त्राभूषणभूमिगोगजाश्वमहिषगृहादिकं वस्तु प्रयच्छन्ति ।

**वरुणो ददातु सोऽमृतत्वमशीय प्राणो दात्रऽएधि व्वयो मह्यं प्रतिग्रहीत्रे बृहस्पतये त्वा मह्यं व्वरुणो ददातु । सोऽमृतत्वमशीय त्वग्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रे यमाय त्वा मह्यं व्वरुणो ददातु । सोऽमृतत्वमशीय हयोदात्रऽएधि व्वयो मह्यं प्रतिग्रहीत्रे ॥२॥**

**कोऽदात् कस्माऽअदात् कामोऽदात् कामायाऽदात् ।**

**कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥३॥**

### (प) निष्क्रमणम्

ततो वरः कन्यायाः दक्षिणपाणिं गृहीत्वा वेदीं प्रति निष्क्रामेत् –

ॐ यदैषीत्याथर्वण ऋषिर्लिङ्गोक्ता देवता अनुष्टुप् छन्दः निष्क्रमणे विनियोगः ।

**ॐ यदैषि मनसा दूरं दिशो नु पवमानो वा । हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोतु** ………[२४] **देवि !**

॥ इति कन्यादानविधिः ॥

## ६. अथ विवाहविधिः

सवधूको वरो वधूं दक्षिणतः कृत्वा वेद्याः समीपे उदङ्मुख उपविशेत् । पुष्पपल्लववस्त्रभूषितं सजलं कलशं स्कन्धेन दधानः कश्चन दृढो ब्राह्मणादिः (शूद्रभिन्नः) होमवेद्या दक्षिणभागे मौनी तिष्ठेत् ।[२५]

### (क) परस्परेक्षणम्

कन्याप्रदः **परस्परं समीक्षेथाम्** इति प्रैषं दत्वा वधूवरौ परस्परमीक्षयेत् । इक्षमाणां वधूम् इक्षमाण एव वरः –

ॐ अघोरचक्षुरित्यादीनां चतुर्णां प्रजापतिर्ऋषिः आद्यन्तयोस्त्रिष्टुप् मध्यमयोरनुष्टुप् छन्दः कुमारी देवता परस्परेक्षणे विनियोगः ।

---

२४. वरः स्वमनोरथानुसारेण कन्याया नूतनं नाम मनसा कृत्वा तामादाय निष्क्रामेत् । अस्मिन्नवसरे सधवा आप्ताः सुवासिन्यः कन्यामन्तर्नीत्वा समङ्गलगानं वरदत्तेन वस्त्राभरणादिना तां विभूषयन्ति ।

२५. "उदकुम्भं स्कन्धे कृत्वा दक्षिणतोऽग्नेर्वाग्यतः स्थितो भवति, उत्तरत एकेषाम् ।" इति पारस्करसूत्राद्दक्षिणत उत्तरतो वा कलशधारिणो मौनिनः पुरुषस्य स्थितिः, न त्वाग्नेयभागे इति बोध्यम् ।

**ॐ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः ।**

**वीरसूर्देवकामा स्योना शन्नो भव द्विपदे शञ्चतुष्पदे** ॥१॥

**ॐ सोमः प्रथमो व्विविदे गन्धर्वो विविद उत्तरः ।**

**तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः** ॥२॥

**ॐ सोमोददद्गन्धर्वाय गन्धर्वोददग्नये ।**

**रयिञ्च पुत्राँश्चादादग्निर्मह्यमथो इमाम्** ॥३॥

**ॐ सा नः पूषा शिवतमामैरय सा न ऊरुऽउशती विहर ।**

**यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्टचै** ॥४॥ इति पठेत् ।

ततः वधूसहितो वरोऽग्निं प्रदक्षिणीकृत्य अग्नेः पश्चिमतो दक्षिणतो वा शुचिवस्त्राद्याच्छन्ने तृणकटे प्रथमं दक्षिणं चरणं निधाय वधूं दक्षिणतः कृत्वा उपविशेत् ।

## (ख) ब्राह्मणवरणम्

आचम्य वरणसामग्रीं गृहीत्वा कुशादीन्यादाय ब्राह्मणं वृणुयात् । तत्र वाक्यम् –

**ॐ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य ....... गोत्रः ....... शर्माऽहं धर्मार्थकामसिद्धिद्वारा श्रीमत्परमेश्वरप्रीतिजननाय ब्राह्मेण विधिना पित्रा प्रदत्तया अनया कन्यकया सह करिष्यमाणे वैवाहिकहोमकर्मणि कृताकृतावेक्षणादिब्रह्मकर्म कर्तुं ...... गोत्रं ...... शर्माणं ब्राह्मणम् एभिर्गन्धाक्षतपुष्प-(धौतौत्तरीयासनजलपात्रमुद्रिका)-प्रभृतिभिर्ब्रह्मत्वेन त्वां वृणे ।**

इति वृत्वा गन्धादिभिरर्चयेत्। **वृतोऽस्मि** इति ब्राह्मणेनोक्ते **यथाविहितं कर्म कुरु** इति वरो ब्रूयात्, '**करवाणि**' इति च ब्राह्मणः ।

ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्त्वा तदुपरि प्रागग्रान् षट् कुशानास्तीर्य तं ब्रह्मत्वेन वृतं ब्राह्मणं (पञ्चाशत्कुशमयं ब्राह्मणं वा) अग्निप्रदक्षिणीकरणक्रमेणाऽऽनीय **अस्मिन् कर्मणि त्वं मे ब्रह्मा भव** इति प्राङ्मुखमुपवेश्य बद्धाञ्जलिः प्रार्थयेत् –

**यथा चतुर्मुखो ब्रह्मा सर्वलोकपितामहः ।**

**तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम** ॥ इति

ततः प्राग्वृतैर्ब्राह्मणैः कुशकण्डिकामारभ्य पञ्चवारुणिपूर्वकं चतुःस्वस्त्यादिपर्यन्तेऽग्निस्था-पनपद्धतिप्रोक्ते तत्तद्देवतापूजनहवनादिके कर्मणि पूर्वं तदानीं वा समापिते सति –

## (ग) हवनसङ्कल्पः

वरः कुशादीन्यादाय –

**ॐ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य ...... गोत्रः ...... शर्मा सवधूकोऽहम् अस्मिन् विवाहकर्मणि "प्रजापतिम्, इन्द्रम्, अग्निम्, सोमम्** (४., **अग्निम्, वायुम्, सूर्यम्** (३., **अग्नीवरुणौ, अग्नीवरुणौ, अग्निम्, वरुणम्, सवितारम्, विष्णुम्, विश्वान्देवान्, मरुतः, स्वर्कान्, वरुणम्** (५., **ऋतासाहम्, ऋतधामानम्, गन्धर्वम्, ओषधीरप्सरसोमुदः, सꣳहितं विश्वसामानं गन्धर्वम्, मरीचीरप्सरस आयुषः, सुषुम्णꣳसूर्यरश्मिं चन्द्रमसं गन्धर्वम्, नक्षत्राण्यप्सरसोभेकुरीः, इषिरं विश्वव्यचसं वातं गन्धर्वम्, अपोऽप्सरस ऊर्ज्जः, भुज्युꣳसुपर्णं यज्ञं गन्धर्वम्, दक्षिणा अप्सरसस्तावाः, प्रजापतिं विश्वकर्माणं मनो गन्धर्वम्, ऋक्सामान्यप्सरसऽएष्टीः** (१२., **चित्तम्, चित्तिम्, आकूतम्, आकूतिम्, विज्ञातम्, विज्ञातिम्, मनः, शक्वरीः, दर्शम्, पौर्णमासम्, बृहन्तम्, रथन्तरम्, प्रजापतिम्** (१३., **अग्निं भूतानामधिपतिम्, इन्द्रं ज्येष्ठानामधिपतिम्, यमं पृथिव्या अधिपतिम्, वायुमन्तरिक्षस्याधिपतिम्, सूर्यं दिवोऽधिपतिम्, चन्द्रमसं नक्षत्राणामधिपतिम्, बृहस्पतिं ब्रह्मणोऽधिपतिम्, मित्रꣳसत्यानामधिपतिम्, वरुणमपामधिपतिम्, समुद्रꣳस्रोतसामधिपतिम्, अन्नꣳसाम्राज्यानामधिपतिम्, सोममोषधीनामधिपतिम्, सवितारं प्रसवानामधिपतिम्, रुद्रं पशूनामधिपतिम्, त्वष्टारं रूपाणामधिपतिम्, विष्णुं पर्वतानामधिपतिम्, मरुतो गणानामधिपतीन्, पितॄन् पितामहान् परानवरान् ततान् ततामहान्** (१८), **अग्निम्, अग्निम्, अग्निम्, वैवस्वतम्, मृत्युम्** (५., **अर्यमणम्, अग्निम्, अग्निम्, अर्यमणम्, अग्निम्, अग्निम्, अर्यमणम्, अग्निम्, अग्निम्, भगम्** (१०), **प्रजापतिम्, अग्निꣳस्विष्टकृतम्** (२. (४ं३ं५ं१२×१३ं१८×५ं१०×२=७२. **यथार्हमाज्यलाजाभ्यां यक्ष्ये** । इत्युत्सृजेत् ।

तत उपयमनकुशान् वामहस्ते धृत्वा प्रजापतिं मनसा ध्यायन् उत्त्थाय समिद्धतमेऽग्नौ पूर्वासादितास्तिस्रः समिधः प्रक्षिप्योपविश्य सपवित्रदक्षिणचुलुकस्थप्रोक्षण्युदकेन ईशानाद्युदगपवर्गं प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुः कुशेन ब्रह्मणाऽन्वारब्धः स्वयमाचार्यो वा स्रुवेण आज्याहुतीर्जुहुयात् । तत्र तत्तदाहुतिषु स्रुवावशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः कर्तव्यः ॥

## (घ) आज्यहोमः

ॐ प्रजापतय इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवताऽऽज्यहोमे विनियोगः ।

मनसा– **ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम** ॥१॥

ॐ इन्द्रायेति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्द इन्द्रो देवताऽऽज्यहोमे विनियोगः ।

**ॐ इन्द्राय स्वाहा, इदमिन्द्राय न मम** ॥२॥ प्रोक्षणीपात्रे प्रक्षेपः, एवं सर्वत्र । एतौ आघारौ

**ॐ अग्नये स्वाहा, इदमग्नये न मम** ॥१॥

**ॐ सोमाय स्वाहा इदं सोमाय न मम** ॥२॥ एतौ आज्यभागौ

ॐ महाव्याहृतीनां प्रजापतिऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवता होमे विनियोगः। **ॐ भूः स्वाहा, इदमग्नये न मम** ॥१॥

**ॐ भुवः स्वाहा, इदं वायवे न मम** ॥२॥

**ॐ स्वः स्वाहा, इदं सूर्याय न मम** ॥३॥

ॐ त्वन्नोऽअग्न इति वामदेव ऋषिस्त्रिष्टुप्छन्दोऽग्नीवरुणौ देवते आज्यहोमे विनियोगः।

**ॐ त्वन्नोऽअग्ने व्वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः।**

**यजिष्ठो वह्नितमः शोशुचानो व्विश्वाद्वेषाँसि प्रमुमुग्ध्यस्मत् स्वाहा** ॥

**इदमग्नीवरुणाभ्यां न मम** ॥४॥

ॐ सत्वन्न इति वामदेव ऋषिस्त्रिष्टुप्छन्दोऽग्नीवरुणौ देवते आज्यहोमे विनियोगः।

**ॐ सत्वन्नोऽअग्नेवमो भवोतीनेदिष्ठोऽअस्याऽउषसो व्युष्टौ।**

**अवयक्ष्व नो व्वरुणꣳरराणो वीहि मृडीकꣳसुहवो नऽएधि स्वाहा** ॥

**इदमग्नीवरुणाभ्यां न मम** ॥५॥

ॐ अयाश्चाग्न इति वामदेवऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता सर्वप्रायश्चित्तहोमे विनियोगः।

**ॐ अयाश्चाग्ने स्यनभिशस्तिपाश्च सत्वमित्वमयाऽअसि।**

**अयानो यज्ञं वहास्ययानो धेहि भेषजँस्वाहा** ॥

**इदमग्नये न मम** ॥६॥

ॐ ये ते शतमिति वामदेव ऋषिस्त्रिष्टुप्छन्दो वरुणः सविता विष्णुर्विश्वेदेवमरुतः स्वर्का देवताः सर्वप्रायश्चित्तहोमे विनियोगः।

**ॐ ये ते शतं व्वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः।**

**तेभिर्नोऽअद्य सवितोत व्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा** ॥

**इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम** ॥७॥

ॐ उदुत्तममिति शुनःशेष ऋषिस्त्रिष्टुप्छन्दो वरुणो देवता सर्वप्रायश्चित्तहोमे विनियोगः।

**ॐ उदुत्तमं वरुण पाशमस्मदबाधमं विमध्यमँश्रथाय ।**

**अथावयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा ॥**

**इदं वरुणाय न मम ॥८॥**

ततो ब्रह्माऽऽचार्यो वा वधूवरौ अभिषिञ्चेत् –

**ॐ गणाधिनाथवरुणब्रह्मविष्णुशिवादयः ।**

**दम्पत्योः कुशलं कुर्युः पूजिता इह देवताः ॥१॥**

**उत्सर्गे वारुणे चैव वरुणो विष्णुना सह ।**

**तुष्टिपुष्टिकरो भूयादुभयोः स्त्रीकुमारयोः ॥२॥**

## (ङ) अथ राष्ट्रभृद् (ऋताषाडादि) होमः

ॐ ऋताषाडिति प्रजापतिर्ऋषिर्यजुश्छन्द ऋताषाडृतधामाग्निर्गन्धर्वो देवता होमे विनियोगः ।

**ॐ ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोप्सरसो मुदो नाम ताभ्यः स्वाहा ।**

**इदमोषधिभ्योऽप्सरोभ्यो मुद्भ्यो न मम ॥१॥**

ॐ सꣳहित इति प्रजापतिर्ऋषिर्यजुश्छन्दः सꣳहितो विश्वसामा सूर्यो गन्धर्वो देवता होमे विनियोगः ।

**ॐ सꣳहितो विश्वसामा सूर्यो गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा व्वाट् ॥**

**इदं सꣳहिताय विश्वसाम्ने सूर्याय गन्धर्वाय न मम ॥३॥**

ॐ सꣳहित इति प्रजापतिर्ऋषिर्यजुश्छन्दो मरीचयोऽप्सरस आयुवो देवता होमे विनियोगः ।

**ॐ सꣳहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम ताभ्यः स्वाहा ॥**

**इदं मरीचिभ्योऽप्सरोभ्य आयुभ्यो न मम ॥४॥**

ॐ सुषुम्ण इति प्रजापतिर्ऋषिर्यजुश्छन्दः सुषुम्णं सूर्यरश्मिचन्द्रमागन्धर्वो देवता होमे विनियोगः ।

**ॐ सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा व्वाट् ॥**

**इदं सुषुम्णाय सूर्यरश्मये चन्द्रमसे गन्धर्वाय न मम ॥५॥**

ॐ सुषुम्ण इति प्रजापतिर्ऋषिर्यजुश्छन्दो नक्षत्राण्यप्सरसोभेकुरयो देवताः होमे विनियोगः ।

**ॐ सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वाहा ॥**

**इदं नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यो न मम ॥६॥**

ॐ इषिर इति प्रजापतिर्ऋषिर्यजुश्छन्द इषिरा विश्वव्यचा वातो गन्धर्वो देवता होमे विनियोगः ।

**ॐ इषिरो व्विश्वव्यचा व्वातो गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा व्वाट् ॥**

**इदम् इषिराय विश्वव्यचसे वाताय गन्धर्वाय न मम ॥७॥**

ॐ इषिर इति प्रजापतिर्ऋषिर्यजुश्छन्द आपोऽप्सरस ऊर्जो देवता होमे विनियोगः ।

**ॐ इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरस ऊर्जो नाम ताभ्यः स्वाहा ॥**

**इदम् अद्भ्योऽप्सरोभ्य ऊर्ग्भ्यो न मम ॥८॥**

ॐ भुज्युरिति प्रजापतिर्ऋषिर्यजुश्छन्दः सुपर्णो यज्ञो गन्धर्वो देवता होमे विनियोगः।

**ॐ भुज्युः सुपर्णो यज्ञो गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा व्वाट् ॥**

**इदं भुज्यवे सुपर्णाय यज्ञाय गन्धर्वाय न मम ॥९॥**

ॐ भुज्युरिति प्रजापतिर्ऋषिर्यजुश्छन्दो दक्षिणाप्सरस्तावा देवता होमे विनियोगः ।

**ॐ भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तावा नाम ताभ्यः स्वाहा ॥**

**इदं दक्षिणाभ्योऽप्सरोभ्यस्तावाभ्यो न मम ॥१०॥**

ॐ प्रजापतिरिति प्रजापतिर्ऋषिर्यजुश्छन्दः प्रजापतिर्विश्वकर्मा मनो गन्धर्वो देवता होमे विनियोगः ।

**ॐ प्रजापतिर्विश्वकर्मा मनो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा व्वाट् ॥**

**इदं प्रजापतये विश्वकर्मणे मनसे गन्धर्वाय न मम ॥११॥**

ॐ प्रजापतिरिति प्रजापतिर्ऋषिः यजुश्छन्द ऋक्सामान्यप्सरस एष्टयो देवता होमे विनियोगः ।

**ॐ प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्य ऋक्सामान्यप्सरस एष्टयो नाम ताभ्यः स्वाहा ॥**

**इदं ऋक्सामभ्योऽप्सरोभ्य एष्टिभ्यो न मम ॥१२॥**

॥ इति राष्ट्रभृद्धोमः ॥[२६]

---

२६. अत्रापि राष्ट्रभृद्धोमसाङ्गतासिद्धये यथासम्प्रदायं केचन गोदानं कुर्वन्ति ।

ततो वधूवरौ अभिषिञ्चेत् –

**ॐ ऋताषाडाद्याहुतिभिर्दद्यात् प्रीतो हुताशनः ।**

**आयुर्दीर्घं च सौख्यं च पुत्रपौत्रप्रवर्धनम् ॥१॥**

**उत्सर्गे वारुणे चैव वरुणो विष्णुदेवता ।**

**कुरुतां सुखसौभाग्यमुभौ तावनयोर्द्वयम् ॥२॥**

**पञ्चानां लोकपालानामृषीणां च ध्रुवस्य च ।**

**यत् कल्याणं तदनयोर्दद्यात् प्रीतो हुताशनः ॥३॥**

**गन्धर्वाप्सरसश्चैव प्रयच्छन्तु यशः श्रियम् ।**

**दीर्घमायुस्तथारोग्यमुभयोर्वरकन्ययोः ॥४॥**

## (च) अथ जयाहोमः

ॐ चित्तं चेति परमेष्ठी ऋषिः चित्तं देवता यजुश्छन्दो जयाहोमे विनियोगः ।

**ॐ चित्तं च स्वाहा, इदं चित्ताय न मम ॥१॥**

ॐ चित्तिश्चेति परमेष्ठी ऋषिः चित्तिर्देवता यजुश्छन्दो होमे विनियोगः ।

**ॐ चित्तिश्च स्वाहा, इदं चित्यै न मम ॥२॥**

ॐ आकूतं चेति परमेष्ठी ऋषिः आकूतं देवता यजुश्छन्दोः होमे विनियोगः ।

**ॐ आकूतं च स्वाहा, इदमाकूताय न मम ॥३॥**

ॐ आकूतिश्चेति परमेष्ठी ऋषिः आकूतिर्देवता यजुश्छन्दो होमे विनियोगः ।

**ॐ आकूतिश्च स्वाहा, इदमाकूत्यै न मम ॥४॥**

ॐ विज्ञातं चेति परमेष्ठी ऋषिर्विज्ञातं देवता यजुश्छन्दो होमे विनियोगः ।

**ॐ विज्ञातं च स्वाहा, इदं विज्ञाताय न मम ॥५॥**

ॐ विज्ञातिश्चेति परमेष्ठी ऋषिर्विज्ञातिर्देवता यजुश्छन्दो होमे विनियोगः ।

**ॐ विज्ञातिश्च स्वाहा, इदं विज्ञात्यै न मम ॥६॥**

ॐ मनश्चेति परमेष्ठी ऋषिर्मनो देवता यजुश्छन्दो होमे विनियोगः ।

**ॐ मनश्च स्वाहा, इदं मनसे न मम ॥७॥**

ॐ शक्करीश्चेति परमेष्ठी ऋषिः शक्करी देवता यजुश्छन्दो होमे विनियोगः ।

**ॐ शक्करीश्च स्वाहा, इदं शक्करीभ्यो न मम ॥८॥**

ॐ दर्शश्चेति परमेष्ठी ऋषिर्दर्शो देवता यजुश्छन्दो होमे विनियोगः ।

**ॐ दर्शश्च स्वाहा, इदं दर्शाय न मम ॥९॥**

ॐ पौर्णमासं चेति परमेष्ठी ऋषिः पौर्णमासं देवता यजुश्छन्दो होमे विनियोगः ।

**ॐ पौर्णमासं च स्वाहा, इदं पौर्णमासाय न मम ॥१०॥**

ॐ बृहच्चेति परमेष्ठी ऋषिर्बृहद्देवता यजुश्छन्दो होमे विनियोगः ।

**ॐ बृहच्च स्वाहा, इदं बृहते न मम ॥११॥**

ॐ रथन्तरं चेति परमेष्ठी ऋषी रथन्तरं देवता यजुश्छन्दो होमे विनियोगः ।

**ॐ रथन्तरं च स्वाहा, इदं रथन्तराय न मम ॥१२॥**

ॐ प्रजापतिरिति परमेष्ठी ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता यजुश्छन्दो होमे विनियोगः ।

**ॐ प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतना जयेषु ।**

**तस्मै विशः समनमन्त सर्वाः स उग्रः स इ हव्व्यो बभूव स्वाहा ॥**

**इदं प्रजापतये न मम ॥१३॥**

॥ इति जयाहोमः ॥ [२७]

ततो वधूवरौ अभिषिञ्चेत् –

**ॐ वधूवराभ्यां यच्छन्तु होमेनाऽनेन तर्पिताः ।**

**चिरमायुर्महत्तेजश्चित्ताद्यास्त्रिदिवौकसः ॥१॥**

**गौरी लक्ष्मीस्तथेन्द्राणी लोपामुद्रा शुभप्रदा ।**

**कुर्यात् सदाचारवतीं स्वतुल्यां कन्यकामिमाम् ॥२॥**

२७. अत्रापि जयाहोमसाङ्गतासिद्धये यथासम्प्रदायं केचन गोदानं कुर्वन्ति ।

## (छ) अथ अभ्यातानहोमः

ॐ अग्निर्भूतानामिति प्रजापतिर्ऋषिरग्निर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः ।

**ॐ अग्निर्भूतानामधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याᳬस्वाहा ॥**

**इदमग्नये भूतानामधिपतये नम मम ॥१॥**

ॐ इन्द्रो ज्येष्ठानामिति प्रजापतिर्ऋषिरिन्द्रो ज्येष्ठानामधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः ।

**ॐ इन्द्रो ज्येष्ठानामधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬस्वाहा ॥**

**इदमिन्द्राय ज्येष्ठानामधिपतये न मम ॥२॥**

ॐ यमः पृथिव्या इति प्रजापतिर्ऋषिर्यमः पृथिव्या अधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः ।

**ॐ यमः पृथिव्या अधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬस्वाहा ॥**

**इदं यमाय पृथिव्या अधिपतये न मम ॥३॥** (अत्र प्रणीतोदकस्पर्शः)

ॐ वायुरिति प्रजापतिर्ऋषिर्वायुरन्तरिक्षस्याधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः ।

**ॐ वायुरन्तरिक्षस्याधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬस्वाहा ॥**

**इदं वायवेऽन्तरिक्षस्याधिपतये न मम ॥४॥**

ॐ सूर्योदिवोऽधिपतिरिति प्रजापतिर्ऋषिः सूर्यो दिवोऽधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः ।

**ॐ सूर्योदिवोऽधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬस्वाहा ॥**

**इदं सूर्याय दिवोऽधिपतये न मम ॥५॥**

ॐ चन्द्रमा नक्षत्राणामिति प्रजापतिर्ऋषिश्चन्द्रमा नक्षत्राणामधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः ।

**ॐ चन्द्रमा नक्षत्राणामधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्याᳬस्वाहा ॥**

**इदं चन्द्रमसे नक्षत्राणामधिपतये न मम ॥६॥**

ॐ बृहस्पतिरिति प्रजापतिर्ऋषिर्बृस्पतिर्ब्रह्मणोऽधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः।

**ॐ बृहस्पतिर्ब्रह्मणोऽधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्याᳬस्वाहा ॥**

**इदं बृहस्पतये ब्रह्मणोधिपतये न मम ॥७॥**

ॐ मित्र इति प्रजापतिर्ऋषिर्मित्रः सत्यानामधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः।

**ॐ मित्रः सत्यानामधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याᳬस्वाहा ॥**

**इदं मित्राय सत्यानामधिपतये न मम ॥८॥**

ॐ वरुण इति प्रजापतिर्ऋषिर्वरुणोऽपामधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः।
**ॐ वरुणोऽपामधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याᳬस्वाहा ॥**

**इदं वरुणायापामधिपतये न मम ॥९॥**

ॐ समुद्र इति प्रजापतिर्ऋषिः समुद्रः स्रोत्यानामधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः।

**ॐ समुद्रः स्रोत्यानामधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याᳬस्वाहा ॥**

**इदं समुद्राय स्रोत्यानामधिपतये न मम ॥१०॥**

ॐ अन्नमिति प्रजापतिर्ऋषिरन्नᳬसाम्राज्यानामधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः।

**ॐ अन्नᳬसाम्राज्यानामधिपतिस्तन्मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याᳬस्वाहा ॥**

**इदमन्नाय साम्राज्यानामधिपतये न मम ॥११॥**

ॐ सोम इति प्रजापतिर्ऋषिः सोम ओषधीनामधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः।

**ॐ सोम ओषधीनामधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याᳬस्वाहा ॥**

**इदं सोमायौषधीनामधिपतये न मम ॥१२॥**

ॐ सवितेति प्रजापतिर्ऋषिः सविता प्रसवानामधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः।

**ॐ सविता प्रसवानामधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬस्वाहा ॥**

**इदं सवित्रे प्रसवानामधिपतये न मम ॥१३॥**

ॐ रुद्र इति प्रजापतिर्ऋषि रुद्रः पशूनामधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः ।

**ॐ रुद्रः पशूनामधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याꣳस्वाहा ॥**

**इदं रुद्राय पशूनामधिपतये न मम ॥१४॥** (अत्र प्रणीतोदकस्पर्शः)

ॐ त्वष्टेति प्रजापतिर्ऋषिस्त्वष्टा रूपाणामधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः ।

**ॐ त्वष्टा रूपाणामधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याꣳस्वाहा ॥**

**इदं त्वष्ट्रे रूपाणामधिपतये न मम ॥१५॥**

ॐ विष्णुरिति प्रजापतिर्ऋषिर्विष्णुः पर्वतानामधिपतिर्देवता पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः ।

**ॐ विष्णुः पर्वतानामधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याꣳस्वाहा ॥**

**इदं विष्णवे पर्वतानामधिपतये न मम ॥१६॥**

ॐ मरुत इति प्रजापतिर्ऋषिर्मरुतो गणानामधिपतयो देवताः पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः ।

**ॐ मरुतो गणानामधिपतयस्ते मावन्त्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याꣳस्वाहा ॥**

**इदं मरुद्भ्यो गणानामधिपतिभ्यो न मम ॥१७॥**

ॐ पितर इति प्रजापतिर्ऋषिः पितरः पितामहाः परेऽवरे ततास्ततामहा देवताः पङ्क्तिश्छन्दोऽभ्यातानहोमे विनियोगः ।

**ॐ पितरः पितामहाः परेऽवरे ततास्ततामहा इह मावन्त्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याꣳस्वाहा ॥**

**इदं पितृभ्यः पितामहेभ्यस्ततेभ्यस्ततामहेभ्यो न मम ॥१८॥** (अत्र प्रणीतोदकस्पर्शः)

॥ इत्यभ्यातानहोमः ॥[२८]

---

२८. अत्रापि अभ्यातानहोमसाङ्गतायै यथासम्प्रदायं केचन गोदानं कुर्वन्ति ।

अथ वधूवरौ अभिषिञ्चेत् तत्र मन्त्रौ –

**ॐ ब्रह्मा विष्णुस्तथा रुद्रो गुरुः शुक्रश्च भार्गवः ।**

**आयुर्दीर्घं च सौख्यं च प्रयच्छन्त्वनयोर्द्वयोः ॥१॥**

**अग्निर्भूरपि यज्ञेऽस्मिन् श्रीधरश्च श्रिया सह ।**

**देयात् पुत्रान् सुखं लक्ष्मीं सौभाग्यमपि सर्वदा ॥२॥**

## (ज) अथ गुप्ताहुतयः

वधूवरयोः पुरस्तात् प्रसारितेन पटेन वह्निं व्यवधाय –

ॐ अग्निरैतु इत्यादीनां चतुर्णां मन्त्राणां प्रजापतिर्ऋषिः परम्मृत्यो इति मन्त्रस्य सङ्कसुक ऋषिः पञ्चानामपि त्रिष्टुप् छन्दः लिङ्गोक्ता देवता आज्याहुतिहोमे गुप्ताहुतिहोमे च विनियोगः ।

**ॐ अग्निरैतु प्रथमो देवतानाᳫँसोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् ।**

**तदयᳫँराजा व्वरुणोऽनुमन्यतां यथेयᳫँस्त्री पौत्रमघं न रोदात् स्वाहा ॥**

**इदमग्नये न मम ॥१॥**

**ॐ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः ।**

**अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियᳫँस्वाहा ॥**

**इदमग्नये न मम ॥२॥**

**ॐ स्वस्ति नो अग्ने दिव आ पृथिव्या विश्वानि धेह्यथा यजत्र ।**

**यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रᳫँस्वाहा ॥**

**इदमग्नये न मम ॥३॥**

**ॐ सुगन्नु पन्थां प्रदिशन्नऽएहि ज्योतिष्मद्धेह्यजरन्न आयुः ।**

**अपैतु मृत्युरमृतं न आगाद्वैवस्वतो नोऽअभयं कृणोतु स्वाहा ॥**

**इदं वैवस्वताय न मम ॥४॥**[२९] (अत्र प्रणीतोदकस्पर्शः)

---

२९. केचित् एतदन्ताश्चतस्र आहुतीर्हुत्वैव वह्निमन्तर्धाय एतां पञ्चमीमाहुतिं मनसा मन्त्रं पठन् जुहुयादित्याहुः ।

**ॐ परम्मृत्यो अनुपरेहि पन्थां यस्तेऽअन्यऽइतरो देवयानात् ।**

**चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳरीरिषो मोत व्वीरान् स्वाहा ॥**

**इदं मृत्यवे न मम ॥५॥** (अत्र प्रणीतोदकस्पर्शः)

प्रसारितं वस्त्रमुत्तार्य वधूवरौ अभिषिञ्चेत् –

**ॐ गोविन्दो गोकुले तिष्ठन् गोपीभिर्विहरन् सह ।**

**तुष्टिपुष्टिकरो भूयादनयोर्वरकन्ययोः ॥**

## (फ) अथ लाजाहोमः

वधूर्वेद्याः पश्चिमतः प्राङ्मुखीभूय तिष्ठेत्, तस्या वामतो वरस्तिष्ठेत् । घृताभिघारितानां शमीपलाशमिश्रितानां शूर्पे चतुर्भागतया पृथक् स्थापितानां लाजानां मध्ये प्रथमभागतः भ्रात्रा अञ्जलिना प्रदत्तान् लाजान् अञ्जलौ गृहीत्वा वरेण अन्वारब्धा वधूर्मन्त्रं पठित्वा त्रिवारं जुहुयात्, तत्र मन्त्राः –

**विनियोगः-** ॐ अर्यमणमित्याथर्वण ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता लाजाहोमे विनियोगः ।

१. **ॐ अर्यमणं देवं कन्या अग्निमयक्षत ।**

**स नो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा ॥ इदमर्यम्णे न मम ॥१॥**

इति प्रथमाहुतौ हुतायाम्, पुनः प्रथमभागतो भ्रात्रा दत्तान् लाजान् गृहीत्वा –

२. **ॐ इयं नार्युपब्रूते लाजानावपन्तिका ।**

**आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ॥ इदमग्नये न मम ॥२॥**

इति द्वितीयाहुतौ हुतायाम्, पुनः प्रथमभागतो भ्राता दत्तान् लाजान् गृहीत्वा –

३. **ॐ इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव ।**

**मम तुभ्यं च संवननं तदग्निरनुमन्यतामियꣳस्वाहा ॥ इदमग्नये न मम ॥३॥**

## (ञ) पाणिग्रहणम्

ततो वध्वाः दक्षिणहस्ताङ्गुष्ठं गृहीत्वा वरश्चतुरो (४. मन्त्रान् पठेत्, तत्र मन्त्राः –

ॐ गृभ्णामीत्यादीनां चतुर्णां याज्ञवल्क्यभरद्वाजाथर्वणप्रजापतय ऋषयः त्रिष्टुबुष्णिगनुष्टुप्यजुश्छन्दांसि पाणिग्रहणे विनियोगः ।

**ॐ गृभ्णामि ते सौभगाय हस्तं मया पत्या जरदष्टिर्यथाऽऽसः ।**

**भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥१॥**

**ॐ अमोऽहमस्मि सा त्वꣳसा त्वमस्यमोऽहम् ।**

**सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वम् ॥२॥**

**ॐ तावेहि विवहावहै सह रेतो दधावहै ।**

**प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहून् ॥३॥**

**ॐ ते सन्तु जरदष्टयः सम्प्रियौ रोचिष्णू सुमनस्यमानौ ।**

**पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शतम् ॥४॥**

## (ट) अश्मारोहणम्

अग्नेरुत्तरतः प्राङ्मुखीं वधूं कृत्वा पूर्वोपकल्पितायां ससिन्दूररेखात्रयायां शिलायां वध्वा दक्षिणं पादाङ्गुष्ठं स्वदक्षिणकरेण गृहीत्वा मन्त्रं पठन् आरोहयेद् वरः –

तत्र मन्त्रः –

ॐ आरोहेममश्मानमित्याथर्वणऋषिः अनुष्टुप् छन्दो वधूर्देवता अश्मारोहणे विनियोगः ।

**ॐ आरोहेममश्मानमश्मेव त्वꣳस्थिरा भव ।**

**अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायतः ॥**

## (ठ) गाथागानम्

अश्मायामारूढायां पुनः पठेद्वरः –

ॐ सरस्वति प्रेदमिति विश्वामित्र ऋषिः सरस्वतीदेवताऽनुष्टुप्छन्दः गाथागाने विनियोगः ।

**ॐ सरस्वति प्रेदमव सुभगे वाजिनीवति ।**

**यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः ॥**

**यस्यां भूतꣳसमभवद्यस्यां विश्वमिदं जगत् ।**

**तामद्यगाथां गास्यामि या स्त्रीणामुत्तमं यशः ॥**

### (ड) परिक्रमणम्

ततो वधूमग्रतः कृत्वा मन्त्रं पठन् वरः प्रदक्षिणमग्निं परिक्रामेत्,

तत्र मन्त्रः –

ॐ तुभ्यमग्न इत्याथर्वण ऋषिरग्निर्देवताऽनुष्टुप्छन्दः परिक्रमणे विनियोगः।

**ॐ तुभ्यमग्ने पर्यवहन्त्सूर्यां वहतु ना सह। पुनः पतिभ्यो जायां दाऽग्ने प्रजया सह॥**

### (ढ) पुनर्द्विर्लाजाहोमादिकम्

ततः पूर्वं स्थानमागत्य पूर्ववत् समन्त्रपाठं वधूवरौ लाजाहोमम्, अङ्गुष्ठग्रहणम्, अश्मारोहणम्, गाथागानम्, अग्निपरिक्रमणं च द्विवारं कुर्याताम्। तृतीयपरिक्रमणे समापिते भ्रात्रा दत्तस्य शूर्पस्य कोणेन सर्वानेव लाजान् समन्त्रपाठं जुहुयात्,

तत्र मन्त्रः -

ॐ भगायेति मन्त्रस्य प्रजापतिऋषिस्त्रिष्टुप् छन्दो भगो देवता लाजाहोमे विनियोगः। **ॐ भगाय स्वाहा, इदं भगाय न मम**। (इति वरो ब्रूयात्)

### (ण) शिलापूजनम्

ततस्तूष्णीं चतुर्थं परिक्रमणम्, तत्र आचाराद्वधूवरौ पूर्वप्रकल्पितां शिलामारोहणक्रमेण गन्धाक्षतपुष्पाण्यादाय पूजयेताम् –

**ॐ तमालपुष्पप्रतिमाङ्गि ! मातः ! सनालनीलोत्पलयुग्महस्ते !**

**स्फुरत्सरस्वद्बृहदम्बरे ! त्वं धरे ! समागच्छ वरं प्रदातुम्॥**

**ॐ भूरसि भूमिरस्यदितिरसि विश्वधा या विश्वस्य भुवनस्य धर्त्री।**

**पृथिवीं यच्छ पृथिवीन्दृꣳह पृथिवीं मा हिꣳसीः॥**

**ॐ मातरं वसुधां देवीं पितरं च महेश्वरम्।**

**आवां प्रपन्नौ स्वः कामान्प्राप्नुयाव यथेप्सितान्॥**

**ॐ अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मे ऽयश्च मे श्यामं च मे लोहं च मे सीसं च मे त्रपु च मे यज्ञेन कल्पन्ताम्॥**

**ॐ देहल्यां स्थापिता सेयं भक्तितोऽभ्यर्चिता शिला ।**

**ददातु विपुलान् भोगान् पुत्रपौत्रादिसंयुतान् ॥**

**ॐ स्थिरो भव वीड्वङ्गऽआशुर्भव वाज्यर्वन् । पृथुर्भव सुखदस्त्वमग्नेः पुरीषवाहणः ॥**

ततो वर उपविश्य ब्रह्मणाऽन्वारब्धः प्रजापतिं ध्यायन् आज्येन जुहुयात्,

तत्र मन्त्रः –

ॐ प्रजापतय इति प्रजापतिऋषिस्त्रिष्टुप् छन्दः प्रजापतिर्देवता आज्यहोमे विनियोगः। **ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम** । हुतशेषस्य आज्यस्य प्रोक्षणीपात्रे प्रक्षेपः।

ततो वधूवरौ यथास्थानमागत्य उपविशेताम् ॥[३०]

## (त) अष्टपर्वतानां पूजा

अष्टदिक्षु वस्त्रोपरि पुञ्जीकृतैस्तण्डुलैर्लाजैर्वा प्रकल्पितान् अष्टौ पर्वतान् पूजयेत् ।

पुञ्जीकरणपूजनयोराकृतिर्यथा –

१. सुमेरुः
२. शिखिरः
३. उदयाचलः
४. मरुतः
५. विन्ध्यः
६. हिमालयः
७. वैराटः
८. शारदः




३०. अत्रापि लाजाहोमसाङ्गतासिद्ध्यर्थं वध्वा गोदानं कारयन्ति यथासम्प्रदायम् ।

वधूवरौ गन्धाक्षतपुष्पाद्यैः पूजयेताम्, तत्र मन्त्राः –

१. **सुमेरुं काञ्चनमयं चतुःशृङ्गविराजितम् ।**

**मण्डलस्योत्तरे भागे चन्द्रमा इति पूजये ॥**

**ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्योऽअजायत ।**

**श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ ॐ सुमेरुपर्वताय नमः ॥१॥**

२. **शिखिरं च महादेवं पाण्डुरं हेमभूषितम् ।**

**येतेशतमितीशाने विदिग्भागे प्रपूजये ॥**

**ॐ येतेशतं व्वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः ।**

**तेभिर्नो अद्य सवितोत व्विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा ॥**

**ॐ शिखिराय नमः ॥२॥**

३. **उदयं पर्वतं पीतरक्तश्वेतं विभूषितम् ।**

**त्रातारमिति मन्त्रेण साधिष्ठातारमर्चये ॥**

**ॐ त्रातारमिन्द्रमवितारमिन्द्रँहवे हवे सुहवँशूरमिन्द्रम् ।**

**ह्वयामि शक्रं पुरुहूतमिन्द्रँस्वस्तिनो मघवा धात्विन्द्रः ॥**

**ॐ उदयाचलाय नमः ॥ ३ ॥**

४. **समुन्नतं कृष्णवर्णं मरुतं नाम पर्वतम् ।**

**आग्नेय्यां स्थितमत्युग्रं मरुत्वानिति पूजये ॥**

**ॐ मरुत्वाँऽइन्द्र वृषभो रणाय पिबा सोम मनुष्यधम्मदाय ।**

**आसिञ्चस्व जठरे मद्ध्वऽऊर्मिन्त्वँराजासि प्रतिपत्सुतानाम् ।**

**उपयामगृहीतोसीन्द्राय त्वा मरुत्वतऽएष ते योनिरिन्द्राय त्वा मरुत्वते ॥**

**ॐ मरुताय नमः ॥४॥**

५. **आरक्तश्वेतवपुषं दक्षिणस्यां दिशि स्थितम् ।**

**धामच्छदिति मन्त्रेण विन्ध्यं पर्वतमर्चये ॥**

**ॐ धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः ।**

**सचेतसो विश्वेदेवा यज्ञं प्रावन्तुनः शुभे ॥ ॐ विन्ध्याचलाय नमः ॥५॥**

६. **नैर्ऋत्यामुषितं तुङ्गं मणिहेमादिभूषितम् ।**

**हिरण्यगर्भमन्त्रेण हिमवन्तं समर्चये ॥**

**ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।**

**सदाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥ ॐ हिमाचलाय नमः ॥६॥**

७. **पाण्डवैर्गुप्तचर्यार्थमाश्रितं पश्चिमे स्थितम् ।**

**धन्वनागेति मन्त्रेण वैराटं गिरिमर्चये ॥**

**ॐ धन्वना गा धन्वनाजिञ्जयेम धन्वना तीव्राः समदो जयेम ।**

**धनुः शत्रोरपकामङ्कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥ ॐ वैराटाय नमः ॥७॥**

८. **शारदं शुभ्रवर्णाढ्यं ज्ञानदं करुणायुतम् ।**

**वायव्यां दिशि वायव्यैर्व्वायव्यानिति पूजये ॥**

**ॐ व्वायव्यैर्व्वायव्यान्याप्नोतिशतेन द्रोणकलशम् ।**

**कुम्भीभ्यामम्भृणौसुते स्थालीभिः स्थालीराप्नोति ॥ ॐ शारदाय नमः ॥८॥**

अन्ते प्रसादग्रहणम् ।

## (थ) अथ सप्तपदी

वेद्या उत्तरोत्तरत आस्तृते वस्त्रे सिन्दूरादिभिः सप्त मण्डलानि कृत्वा, वधूम् उदङ्मुखीम् उत्थितां कृत्वा, तस्याः दक्षपादाङ्गुष्ठं दक्षहस्तेन गृहीत्वा वरः सप्तपदानि क्रमेण समन्त्रपाठं प्रक्रामयेत्, तत्र मन्त्राः –

ॐ एकमिष इत्यादिसप्तानां प्रजापतिर्ऋषिर्यजुश्छन्दो लिङ्गोक्ता देवता सप्तपदप्रक्रमणे विनियोगः ।

**ॐ एकमिषे विष्णुस्त्वा नयतु** (१)

ॐ द्वे ऊर्जे विष्णुस्त्वानयतु (२)

ॐ त्रीणि रायस्पोषाय विष्णुस्त्वा नयतु (३)

ॐ चत्त्वारि मायोभवाय विष्णुस्त्वा नयतु (४)

ॐ पञ्च पशुभ्यो विष्णुस्त्वा नयतु (५)

ॐ षड्तुभ्यो विष्णुस्त्वा नयतु (६)

ॐ सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु (७)

ततस्तेषु सप्तमण्डलेषु क्रमेण सप्तर्षीन् गन्धाक्षतपुष्पैः पूजयेताम् वधूवरौ,

तत्र मन्त्राः–

१. अत्रिं मुनिं सपत्नीकमावाह्य प्रथमे पदे ।
पत्न्याऽनयाऽभिनवया संयुक्तः पूजयाम्यहम् ॥
ॐ आदित्यङ्गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमां विश्वरूपम् ।
परिवृङ्ग्धि हर सामा भिमꣳस्थाः शतायुषङ्कृणुहि चीयमानः ॥ ॐ अत्रये नमः ॥१॥

२. पदे द्वितीये सूर्येन्दुरूपं पत्नीसमन्वितम् ।
मुनिं वसिष्ठमावाह्य सदारः पूजयाम्यहम् ॥
ॐ वातो वा मनोवा गन्धर्वः सप्तविꣳशतिः ।
तेऽअग्रेश्वमयुञ्जँस्तेऽअस्मिञ्जवमादधुः ॥ ॐ वसिष्ठाय नमः ॥२॥

३. पदे तृतीयेऽङ्गिरसं मुनिवर्गसमर्चितम् ।
दम्पत्योर्जयदातारं सदारः पूजयाम्यहम् ॥
ॐ गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह ।
बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तुत्वा ॥ ॐ अङ्गिरसे नमः ॥३॥

४. उद्भावितहरिश्चन्द्रमहिमानं मुनीश्वरम् ।
पदे चतुर्थे गाधेयं सदारः पूजयाम्यहम् ॥

**ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् ।**

**होतारं रत्नधातमम् ॥ ॐ विश्वामित्राय नमः ॥४॥**

५. **पराशरसुतं व्यासं मत्स्यगर्भसमुद्भवम् ।**

**पञ्चमेऽत्र पदे प्रीतः सदारः पूजयाम्यहम् ॥**

**ॐ सोमो धेनुꣳसोमोऽअर्वन्तमाशुꣳसोमो व्वीरङ्कर्म्मण्यन्ददाति ।**

**सादन्यं विदथ्यꣳसभेयं पितृश्रवणं यो ददाशदस्मै ॥ ॐ व्यासाय नमः ॥५॥**

६. **षष्ठे पदे भरद्वाजं मुनिं षड्तुविग्रहम् ।**

**आवाह्य यज्ञरक्षायै सदारः पूजयाम्यहम् ॥**

**ॐ वसन्तेनऽऋतुना देवा वसवस्त्रिवृतास्तुताः ।**

**रथन्तरेण तेजसा हविरिन्द्रे व्वयो दधुः ॥ ॐ भरद्वाजाय नमः ॥६॥**

७. **सप्तमेऽत्र पदे शम्भोरंशभूतं मुनीश्वरम् ।**

**दुर्वाससं शुभावाप्त्यै सदारः पूजयाम्यहम् ॥**

**ॐ सप्तऽऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्रसदौ च देवौ । ॐ दुर्वाससे नमः ॥७॥**

इत्थं सम्पूज्य वधूवरौ प्रसादमादाय सप्त ब्राह्मणान् दक्षिणाभोजनादिभिः सन्तोषयेताम् ।

## (द) राजविजयप्रशस्तिगानम् [३१]

(अस्मिन्नवसरे राजवंशविरुदावलिवेत्ता कश्चन ओजस्वी क्षत्रियादिपुरुषः खड्गमुन्नीय साभिनिवेशं राजविजयप्रशस्तिमुच्चैर्गायेदिति (गोरक्षदेशाचारः) ।

---

३१. इदं राजविजयप्रशस्तिगानं 'खाँडो जगाउनु' इति नाम्ना व्यपदिश्यते ।

## (ध) वधूमूर्धाभिषेचनम्

ततो वरः सपत्नीकोऽग्नेः पश्चिमतः स्थित्वा मौनिपुरुषस्कन्धस्थितकलशजलेन साम्रपल्लवेन वधूं मूर्धन्यभिषिञ्चेत्,

तत्र मन्त्राः –

ॐ आप इति प्रजापतिर्ऋषिर्लिङ्गोक्ता देवता यजुश्छन्दो मूर्धाभिषेचने विनियोगः ।

**ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम्** ।

पुनः –

ॐ आपो हिष्ठेति तिसृणां सिन्धुद्वीप ऋषिर्गायत्रीच्छन्द आपो देवता वधूमूर्धाभिषेके विनियोगः ।

**ॐ आपो हिष्ठा मयोभुवस्तानऽऊर्जे दधातन । महेरणाय चक्षसे** ॥१॥

**यो वः शिवतमो रसस्तस्य भाजयते ह नः । उशतीरिव मातरः** ॥२॥

**तस्माऽअरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः** ॥३॥ (इति प्रतिमन्त्रम्)

## (न) सूर्योदीक्षणम्

अथ दिवा विवाहे वरः वधूं **सूर्यमुदीक्षस्व** इति प्रैषेण सूर्यं दर्शयेत् ।

तत्र स्वयमेव मन्त्रं पठेद्वरः –

ॐ तच्चक्षुरिति दध्यङ्ङाथर्वण ऋषिर्ब्राह्मी त्रिष्टुप् छन्दः सूर्यो देवता सूर्योदीक्षणे विनियोगः ।

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्** ॥

वधूः- **उदीक्षे** इति ब्रूयात् ।

रात्रौ विवाहे तु **ध्रुवमुदीक्षस्व** इति वरो ध्रुवं दर्शयेत्, मन्त्रं च स्वयं पठेत् –

ॐ ध्रुवमसीति प्रजापतिर्ऋषिर्ध्रुवो देवता पङ्क्तिश्छन्दः ध्रुवोदीक्षणे विनियोगः ।

**ॐ ध्रुवमसि ध्रुवन्त्वा पश्यामि ध्रुवैधि पोष्ये मयि** ।

**मह्यं त्वादाद्बृहस्पतिर्मया पत्या प्रजावती सञ्जीव शरदः शतम्** ॥

वधूश्च ध्रुवमवीक्षमाणाऽपि **उदीक्षे** इति ब्रूयात् ।

## (प) हृदयालम्भनम्

अथ वरो वध्वा दक्षिणस्कन्धतो हस्तं नीत्वा तस्याः हृदयमालभेत ।

तत्र मन्त्रः –

ॐ मम व्रत इति मन्त्रस्य प्रजापतिर्ऋषिर्देवता च त्रिष्टुप्छन्दः वधूहृदयालम्भने विनियोगः ।

**ॐ मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तन्तेऽअस्तु ।**

**मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम् ॥**

## (फ) अथ सिन्दूरार्पणम् [३२]

ऐशान्यां स्थापिताद् गणेशादारभ्य वधूसीमन्तपर्यन्तम् उभयपक्षीये वस्त्रद्वये प्रसारिते सति वर उत्थाय सिन्दूरपात्रं वामहस्तेन धृत्वा गणेशादिभ्यो देवताभ्यः सिन्दूरं समर्प्य त्रिरुत्क्षिप्य वस्त्रद्वयेऽविच्छिन्नां सिन्दूररेखां प्रवर्तयन् वधूसमीपमागत्य सीमन्तदेशे सिन्दूरं निःक्षिपेत् –

ॐ सुमङ्गलीरिति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवताऽभिमन्त्रणे विनियोगः ।

**ॐ सुमङ्गलीरियं वधूरिमाॅ समेत पश्यत । सौभाग्यमस्यै दत्त्वा यथास्तं विपरेतन ॥**

इति मन्त्रेण त्रिवारं वधूसीमन्तदेशे सिन्दूरं निःक्षिप्य ललाटमध्यं च सिन्दूरबिन्दुविभूषितं कृत्वाऽवशिष्टसिन्दूरसहितं पात्रं तस्यै दद्यात् ।

## (ब) स्थानपरिवर्तनम्

अथ वरः (बलवानन्यो वा कश्चित् सुशीलो ब्राह्मणादिः) कन्यामुत्थाप्य –

ॐ इह गाव इति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता उपवेशने विनियोगः ।

**ॐ इह गावो निषीदन्त्विहाश्वाऽइह पूरुषाः । इहो सहस्रदक्षिणो यज्ञ इह पूषा निषीदतु ।**

इति मन्त्रं पठन् (अग्नेः प्रागुदग्वा पूर्वप्रकल्पिते गुप्तागारे उत्तरलोम्नि प्राग्ग्रीवे लोहिते आनडुहे चर्मणि)[३३] प्रागग्रैरुदगग्रैर्वा कुशैरास्तृते लोहितवस्त्रच्छन्ने सुखासने वा उपवेशयेत् । उपविष्टा वधूश्च वरस्य वस्त्रान्तमाकृष्य **स्थीयताम्** इति वदन्ती तं स्वदक्षिणत उपवेशयेत् पादयोः प्रणमेच्च ।

---

३२. सिन्दूरार्पणविधानं कन्यापक्षीया पितृबान्धवा न पश्येयुः आचारात् ।

३३. कलौ तदभावात् प्रागग्रानुदगग्रान् वा कुशानास्तरेत्, इति संस्कारभास्करे । साम्प्रतिकैः शिष्टैस्तु केवलं वधूरुत्थाप्य स्वस्थाने उपवेश्यते, स्वयं च वधूस्थाने उपविश्यते ।

## (भ) गोदानम्

वर आचार्याय गोयुग्मं (गां वा) दद्यात् ।

गोयुग्मं (गां वा) ब्राह्मणं च सम्पूज्य कुशादीन्यादाय –

**ॐ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य** ...... **गोत्रः** ...... **शर्माऽहम् कृतस्यैतावतो वैवाहिकस्य कर्मणः साङ्गतासिद्धये रुद्रदैवताम् इदं गोयुग्मं (इमां गां वा)** ...... **गोत्राय** ...... **शर्मणे ब्राह्मणाय तुभ्यं सम्प्रददे** । इति दद्यात् । स्वस्तीति प्रतिवचनम् ।

ततः कपिले सर्वदेवानामिति गां प्रार्थ्य दानप्रतिष्ठाद्रव्यं सङ्कल्प्य दद्यादिति ॥

## (म) अथ मधुपर्कप्राशनमाचारात् (माहुर खुवाउने)घद्ध

दधिमधुघृतं पिहितं कांस्यपात्रे समानीतं वह्नौ तापितं पुरस्तात् कृत्वा पिधानमपसार्य वधूवरौ समालोडयेताम् । ततः कनिष्ठिकया समं विभज्य अहंपूर्विकामालम्ब्य मन्त्रपाठं विनैव परस्परं प्राशयेताम्, हस्तौ प्रक्षाल्याऽऽचामेताञ्च ।

## (य) अथाऽऽदित्यदुहिता शैलराजदुहिता च

वधूवरौ परस्परं सम्मुखीभूय यथासुखं स्थित्वा सपणं (ठिनी) विन्यासं दीव्येताम् अक्षैः । तयोरुपरि वस्त्रं प्रसार्य तत्र लाजान् प्रक्षिप्य चामराभ्याम् आलोडयेताञ्च कलशवाहिन्यौ केचन अन्ये वा स्त्रियौ, यावन्न मन्त्रपाठः समाप्यते तावत् –

ॐ तपसस्तेजसा प्रभाविता जटाभाराजिनसंछन्नाऽऽदित्यदुहिता बहूनि वर्षाणि ततापः। तेजसा तपन्ती च सा तपतीति विख्याता बभूव । अथैकदा सन्नद्धधन्वा सेनया सहितो वने विचरन् धृतातपत्रो नृपः संवरणः समुपसृत्याऽवोचत् प्रेक्षन्तीं सुभ्रुवं नीलकेशीं यौवनवतीं पीनस्तनीं पृथुश्रोणीं ताम् । हे ! त्वं कस्याऽसि किन्नामा दुहितेति ? सा होवाच- यस्यैकचक्रं भुजगनियमितं सप्ताश्वमचरणेन सारथिनाऽरुणेन प्रणुद्यमानं स्यन्दनम्, य एष भ्राजमानः प्रातरुद्यति, तस्याहं दुहिताऽऽशीर्नामेति । देवरूपी कुण्डलाभरणो महाबाहुः कस्त्वं भोः ! कया कामनया मामेत्यादरेण पृच्छसीति । स होवाच तस्या अमृतोपमां वाचं निशम्य नृपवरः । सुन्दरि ! नृपः संवरणोऽहम्, भार्या मे भव रूपिणीति श्रुत्वा सा होवाच- य एवं मामजीजनत् तं गत्वा तेजोराशिमुद्यन्तं भास्करं वृणुष्वेति । स निशितैः कामशरैस्तुद्यमानः स्वपुरोहितं भगवन्तं

३४. वरस्य विजये यथासमयं पूर्वं कन्यासन्ततेरुत्पत्तिः वध्वास्तु विजये पूर्वं पुत्रोत्पत्तिरिति ग्रामजरतीनां वचसि श्रद्धावती वधूः पुत्रोत्पादनसाभिलाषा वरविजयाय प्रयतते, वरश्च पराजयाल्लज्जमानो वधूविजयाय प्रयतते, इति व्यतिकरोऽयं प्रमोदहेतुः कौतुकावलोकनतरलानां विशेषेण वधूटीनाम् ।

वसिष्ठमुपातिष्ठत, मदर्थे तां ब्रध्नं वृणुष्वेति। स होवाच ब्रध्नस्तेन गत्वा ऋग्भिर्यजुर्भिः सामभिस्तूयमानो वसिष्ठो यं कामं कामयसे तत्ते दास्यामीति। स होवाच स एष कामो याज्यो मे नृपः संवरणस्तस्यार्थे दुहितरं ते वृणोमीति। दत्तेति स होवाच प्रतिगृहाणेति। अथ वसिष्ठस्तां वाचमनुश्रुत्य तुष्टः प्रतीचीं दिशमागतस्तत्सर्वं तस्मै निवेदयामास। अथ तेन निवेदिते सुदिने सुमुहूर्ते सुनक्षत्रे सुयोगे पुण्याहे पाणिं जग्राह संवरणः। पाणिनाऽऽदौ पित्राऽनुमङ्गलं प्रत्तम्। उभावध्वर्युरन्वारेभे। कुशैर्लाजैः शमीपलाशैः समिद्भिः समन्त्रं हव्यवाहे हूयमाने देवतानामृषीणां गन्धर्वाणामप्सरसां सतां पश्यतां मङ्गलध्वनिभिर्ऋग्यजुःसामाथर्वाङ्गिरसेतिहासपुराणमन्त्रध्वनिमिलितैः सनृत्यवादित्रगीतैर्विवाहः संवृत्तः। अथ हैतद्भानुर्धनं ददौ, गोऽश्वानां दासीनां महिषाणामजाविकानां कुञ्जराणां शतं साहस्रवस्त्रमपरिमितं रजतं काञ्चनम्। तद्गृहीत्वा स्वपुरं रथेन वाजिभिर्युक्तेन गच्छन्तौ सम्मोदमानौ दम्पती जगाद तौ भानुः- भोः संवरण धरणीपते! तपती नाम सेयं भार्या ते संवृत्ता, श्रृणुतं मद्वाक्यम्- ब्राह्मणवत्सलो भव, एषा ते दारकदारिका अविधवा अष्टपुत्रा जीववत्सा अनुत्तरवादिनी प्रैषकारिणी सत्यवादिनी ब्राह्मणस्तवा दैवतस्तवा मातरं सन्त्यज्य पितरं सन्त्यज्य भ्रातॄन् सन्त्यज्य भर्तारमर्चितं सुपूजितं चाऽनुयाति त्वाम्। यथेन्द्रस्येन्द्राणी, यथा दशरथस्य कौशल्या, यथा रामस्य सीता, यथा नलस्य दमयन्ती, यथा बालिनश्च तारा, यथा वायोश्चाञ्जनी, यथा नलस्य दमयन्ती, यथा सौदासस्य मदयन्ती, यथा पुरूरवस उर्वशी, यथा पुरुकुत्सस्य नर्मदा, यथा शन्तनोश्च गङ्गा, यथा धृतराष्ट्रस्य गान्धारी, यथा पाण्डोश्च कुन्ती, यथा पाण्डवानां द्रौपदी, यथा भीमसेनस्य हिडिम्बा, यथाऽर्जुनस्य सुभद्रा, यथा दुर्योधनस्य भानुमती, यथादित्यस्य (मम) च्छाया, यथा चन्द्रस्य रोहिणी, यथा गणेशस्य सिद्धिबुद्धी, यथाऽगस्त्यस्य लोपामुद्रा, यथा योगेश्वरस्य मैत्रेयी, यथा वसिष्ठस्याऽरुन्धती, यथाऽत्रेरनसूया, यथा ब्रह्मणः सावित्री, यथा कृष्णस्य रुक्मिणी, यथा पशुपतेरुमा, यथा गौतमस्याऽहल्या, यथा हिमालयस्य मेनका, यथैवमन्येषामन्या, तथा तवेयमनुगामिनीति ॥१॥

अथ शैलराजगृहे मेनका कन्यकां प्रजाता, कपर्दिने भवाय प्रत्तां च तां दुहितरं सा होवाच पत्यौ शृण्वति, अविधवा सुभगा कल्याणवती धनवती पुत्रवती यौवनवती यशोवती भवेति, भवं चोवाच।

श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्।

इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥ इति।

अथ भवः प्रत्युवाच सदा सुप्रीता वरदा भव, अथात इयं सर्वमङ्गला भूयात्,

माहेन्द्रीव वारुणीवोत्तमानि लप्सीष्ट शोभनानि, नाहमेनां जह्याम्।

त्रैलोक्ये सन्ति ये देवा ब्रह्मविष्ण्वादयः सुराः।

एते त्वत्साक्षिणस्त्वं मेऽभवः प्रागङ्गना सती॥

त्यज्यते समयान्माता त्यज्यन्ते भ्रातरोऽपि वा।

त्यज्यन्ते बान्धवाः सर्वे नाऽङ्गना सहगामिनी॥

न रोचयेऽश्वं न गजं हिरण्यं कौशेयं वासो विविधं च रत्नम् ।

शुद्धा कन्या करगा शैलभर्तस्तव प्रसादान्मम शंकरस्य ॥

लोके कीर्तिः कुले वृद्धिर्लक्ष्मीश्च गृहमागता ।

स्त्रीरत्नं च मया प्राप्तं त्वत्प्रसादाद्धिमालय ॥

यद्यत्कल्याणकृल्लोके या च भक्तिरधोक्षजे ।

आवयोर्दत्तचित्तानां सर्वे भवतु तत्सदा ॥ इति

॥ इत्यादित्यदुहिता शैलराजदुहिता च ॥[३५]

## (र) अथ ग्रहतिलकम्

वधूवरयोरभिमुखीभूतः कश्चन ब्राह्मणः सदधिसिन्दूराक्तैरक्षतैः पूर्वं वरस्य पश्चाद्वध्वा ललाटे प्रतिमन्त्रान्ते तिलकं कुर्यात्, तत्र मन्त्राः –

**ॐ गजाननः पाशसनाथपाणी, रक्ताम्बरो ह्युन्दुरुवाहनश्च ।**

**लड्डूकहस्तो हि गणाधिनाथो वरस्य वध्वा वितनोतु भूतिम् ॥१॥**

**हंसाधिरूढः स चतुर्मुखः स कमण्डलुर्यज्ञपवित्रदेहः ।**

**इन्द्रादिदेवैरभिपूजितश्च वरस्य वध्वा वितनोतु भूतिम् ॥२॥**

**शङ्खं गदां चक्रसरोरुहे च करैर्दधानो गरुडाधिरूढः ।**

**जगत्पतिर्वाक्पतिपूजितश्च वरस्य वध्वा वितनोतु भूतिम् ॥३॥**

**गङ्गाधरो भस्मजटाधरश्च ललाटचन्द्रो वृषवाहनश्च ।**

**त्रिशूलखट्वाङ्गधरो महेशो वरस्य वध्वा वितनोतु भूतिम् ॥४॥**

**त्रिवेदमूर्तिर्जगदेकचक्षुर्विरिञ्चिनारायणशङ्करात्मा ।**

**प्रभाकरश्चाखिललोकहेतुर्वरस्य वध्वा वितनोतु भूतिम् ॥५॥**

**कलानिधिः कैरववर्गबन्धुः कम्बुद्युतिः पुण्यविवृद्धिहेतुः ।**

---

३५. इयमादित्यदुहिता शैलराजदुहिता च लेखाशुद्धिबाहुल्येन दुर्बोधाऽपि केवलमर्थानुसन्धानेन यथाकथं चित् संशोध्य निवेशिता । समुद्रदुहिता तु क्वचित्पठ्यमानाऽपि नात्र निवेशितः तत्पुस्तकस्यैकस्यैवोपलब्धस्याशुद्धिमयस्य साहाय्यमगृह्णता मया ।

महौषधीशो रजनीपतिश्च वरस्य वध्वा वितनोतु भूतिम् ॥६॥

महीतनूजो महिमातिधीरः सदा बलीयान् सततं पुराणः ।
हिरण्यवर्णः कनकाभिधानो वरस्य वध्वा वितनोतु भूतिम् ॥७॥

शशाङ्कसूनुर्गुणपूर्णनामा सुखादिहेतुर्व्यसनापहारी ।
बुधश्च विज्ञानविचक्षणोऽसौ वरस्य वध्वा वितनोतु भूतिम् ॥८॥

समस्तविज्ञानगुरुर्मनीषी सुरेन्द्रपूज्यः सुजनैकगम्यः ।
बृहस्पतिर्मङ्गलनामधेयो वरस्य वध्वा वितनोतु भूतिम् ॥९॥

तेजोऽधिकश्चाखिलखेचराणां शुक्रः सुदीप्तः सुरशत्रुपूज्यः ।
यशोधनोऽसौ मृतजीवनश्च वरस्य वध्वा वितनोतु भूतिम् ॥१०॥

समस्तखेटोपरिमार्गगामी शनैश्चरः सन्ततमादरेण ।
अस्मिन् सुलग्ने समुपागतः सन् वरस्य वध्वा वितनोतु भूतिम् ॥११॥

यो धावतेऽद्यापि सुधाशनः सँस्तमोमयश्चन्द्रमसं च सूर्यम् ।
स्वयं बली लब्धवरः स राहुर्वरस्य वध्वा वितनोतु भूतिम् ॥१२॥

समस्तसंपत्समवाप्तिहेतुः केतुः प्रपन्नार्तिहरोऽत्र लग्ने ।
भूत्वाऽर्धमूर्तिः क्षितिसौख्यकर्ता वरस्य वध्वा वितनोतु भूतिम् ॥१३॥

सुधूम्रवर्णश्चलसप्तजिह्वः शाण्डिल्यपुत्रः स धनञ्जयश्च ।
शृङ्ग्याख्यगोत्रो ह्यरणीप्रसूश्च वरस्य वध्वा वितनोतु भूतिम् ॥१४॥

सिंहाधिरूढा वरचापखड्गशूलारिखेटेष्वहियुक्तबाहुः ।
त्रैलोक्यमाता सुचिराय दुर्गा वरस्य वध्वा वितनोतु भूतिम् ॥१५॥

सुराश्च सर्वे ग्रहदेवताश्च सप्तर्षयो दिक्पतयो नगाश्च ।
सयोगवारास्तिथयोऽखिलाश्च वरस्य वध्वाश्च शुभानि कुर्युः ॥१६॥

ये यन्निदेशादिह कर्तुमीशा ये यन्निदेशादपि हर्तुमीशाः ।
ते तन्निदेशादनयोः शुभानि प्रत्यर्प्य गच्छन्तु यथावकाशम् ॥१७॥

॥ इति ग्रहतिलकम् ॥

## ७. उत्तराङ्गहोमः

ततोऽग्निस्थापनोक्तं उत्तराङ्गहोमं समाप्य,

### (क) स्विष्टकृद्धोमः

ब्रह्मणाऽन्वारब्धो होता स्विष्टकृते जुहुयात् –

ॐ अग्नये स्विष्टकृदिति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता स्विष्टकृद्धोमे विनियोगः ।

**ॐ अग्नये स्विष्टकृते स्वाहा, इदमग्नये स्विष्टकृते न मम ।**[३६]

ततो वरः संस्रवं प्राश्य आचामेत् । अत्रैव दधिगुडप्राशनमाचमनं चाऽऽचारात् ।

### (ख) पूर्णपात्रदानम्

षट्पञ्चाशदुत्तरशतद्वय-(२५६)मुष्टिपरिमितं (बहुभोक्तृपुरुषभोजनपर्याप्तं वा) सफलं सब्रह्मसूत्रं सद्रव्यमन्नमुपनीय वरः कुशादीन्यादाय –

**ॐ अद्यकृतैतद् विहितस्य विवाहहोमादिसकलकर्मणः अपूर्णस्य सतः परिपूरणार्थमिदं ब्रह्मसूत्रद्रव्यफलसहितं पूर्णपात्रं प्रजापतिदैवतं ...... गोत्राय ...... शर्मणे ब्रह्मस्वरूपाय ब्राह्मणाय तुभ्यमहं सम्प्रददे । ॐ तत्सन्न मम ।** इत्युच्चार्य दद्यात् । स्वस्तीति प्रतिवचनम् ।

### (ग) प्रणीताविमोकः

ॐ सुमित्रिया, दुर्मित्रिया इति द्वयोर्यजुषोः प्रजापतिर्ऋषिरापोदेवताः प्रणीताविमोके विनियोगः ।

**ॐ सुमित्रिया नऽआपऽओषधयः सन्तु ।**

इति सपवित्रेण प्रणीताप्रोक्षण्योर्जलेन वधूवरौ अभिषिच्य तदैशान्यां प्रणीतापात्रं न्युब्जीकुर्यात्–

**ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च व्वयं द्विष्मः ।**

### (घ) बर्हिर्होमः

तत आस्तरणक्रमेण बर्हींषि समानीय घृतेनाऽभिधार्य हस्तेन जुहुयात् मन्त्रेणानेन –

**ॐ देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पतऽइमन्देव यज्ञꣳस्वाहा वातेधाः ॥**

---

३६. १. आघाराज्यभागाहूती द्वे द्वे (४. महाव्याहृत्याहुतयस्तिस्रः (३) सर्वप्रायश्चित्ताहुतयः पञ्च (५. राष्ट्रभृदाहुतयो द्वादश (१२) जयाहुतयस्त्रयोदश (१३) अभ्यातानाहुतयोऽष्टादश (१८) गुप्ताहुतयः पञ्च (५. लाजाहुतयो दश (१०) प्रजापतिस्विष्टकृदाहूती द्वे (२) इति संहत्य (७२) द्वासप्तत्याहुतिभिर्वैवाहिको होमः पूर्णतां यातीति आद्यानां द्वादशाहुतीनामन्यत्र पृथक्करणं शिष्टाञ्जनाननुसरतां दृष्टहरिहरादिभाष्यग्रन्थानां सज्जनानां पैरोहित्यप्रवृत्तानां न समुचितं भासेत इत्याशास्यते ।

## (ङ) पूर्णाहुतिः[३७]

सपत्नीकेन वरेण पादयोरन्वारब्धो होता उत्त्थाय ब्रह्मणा सहितः स्रुवे फलादिकं निधाय अविच्छिन्नया घृतधारया जुहुयात् –

**ॐ मूर्धानन्दिवोऽअरतिं पृथिव्या वैश्वानरमृतऽआजातमग्निम् ।**

**कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः स्वाहा ॥**

## (च) वस्त्रहोमः

एधोस्येति वधूवरकर्तृको घृताभिघारितचरुसहितवस्त्रहोमः -

**ॐ एधोस्येधिषीमहि समिदसि तेजोसि तेजो मयि धेहि ।**

**समाववर्ति पृथिवी समुषाः समुसूर्यः समुविश्वमिदं जगत् ।**

**वैश्वानरञ्ज्योतिर्भूयासं विभून्कामान् व्यश्नवै भूः स्वाहा ॥**

## (छ) शेषचरुहोमः

**ॐ अभ्यादधामि समिधमग्ने व्रतपते त्वयि ।**

**व्रतञ्च श्रद्धाञ्चोपैमीन्धे त्वा दीक्षितोऽअहम् ॥**

**ॐ यत्र ब्रह्म च क्षत्रञ्च सम्यञ्चौ चरतः सह ।**

**तँल्लोकं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना ॥**

**ॐ यत्रेन्द्रश्च वायुश्च सम्यञ्चौ चरतः सह ।**

**तँल्लोकं पुण्यं प्रज्ञेषं यत्र सेदिर्न विद्यते स्वाहा** ॥ इति

## (ज) तिलककरणम्

स्रुवेण दग्धं चरुम् (भस्म) आनीय दक्षिणकराऽनामिकया वरस्य वध्वाश्च त्र्यायुषं कुर्यात् –

| | |
|---|---|
| **ॐ त्र्यायुषञ्जमदग्नेः** | (इति ललाटे) |
| **ॐ कश्यपस्य त्र्यायुषम्** | (इति ग्रीवायाम्) |
| **ॐ यद्देवेषु त्र्यायुषम्** | (इति दक्षिणबाहुमूले) |
| **ॐ तन्नोऽअस्तु त्र्यायुषम्** | (इति हृदि) |

---

३७. विवाहे व्रतबन्धे च शालायां चौलकर्मणि । गर्भाधानादिसंस्कारे पूर्णाहुतिं न कारयेत् । इति गोभिलगृह्यभाष्यवचने सत्यपि– होमान्ते सर्वकल्याणी देया पूर्णाहुतिः सदा । इतीमां संस्कारभास्करोद्धृतां ग्रहयज्ञकल्पवल्युक्रिमनुसरन्तः कुर्वन्ति पूर्णाहुतिं गोरक्षदेशीया विद्वांसः ॥

## (झ) क्षेत्रपालाय बलिदानम्

ततः कुङ्कुमादिरक्तं रक्तपुष्पादियुक्तं सदीपं सवस्त्रं सदक्षिणं क्षेत्रपालबलिं वधूवरौ नीराज्य ब्राह्मणेन शूद्रेण वा चतुष्पथे क्षेपयेत्, तत्र वाक्यम् –

**ॐ क्षेत्रपालाय भूतप्रेतपिशाचराक्षसशाकिनीडाकिनीवेतालादिपरिवारयुताय इमं बलिं समर्पयामि । भो भो क्षेत्रपाल ! इमं बलिं गृहाण मम यजमानस्य सपत्नीकस्य आयुःकर्ता क्षेमकर्ता पुष्टिदस्तुष्टिदो भव ॥** इति

## (ञ) घृतच्छाया

काँस्यपात्रं सघृतसुवर्णमुपनीय वरोऽभिमन्त्रयेत् –

ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि प्रियन्देवानामनाधृष्टन्देवयजनमसि ।

**ॐ तेजोऽसि शुक्रममृतमायुष्पाऽआयुर्मे पाहि ।**

**देवस्यत्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामाददे ॥**

ततो दूर्वाभिः सम्मार्जयेत् –

**ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवानो दूर्वे प्रतनु सहस्रेण शतेन च ॥**

ततश्छायां पश्येत् –

**ॐ अलक्ष्मीर्यच्च दौस्थ्यं मे सर्वगात्रेष्ववस्थितम् ।**
**तत्सर्वं शमयाऽऽज्य त्वं लक्ष्मीं पुष्टिं च वर्धय ॥**
**आज्यं तेजः समुद्दिष्टमाज्यं पापहरं शुभम् ।**
**आज्यं सुराणामाहारं आज्ये लोकाः प्रतिष्ठिताः ॥**
**भौमान्तरिक्षं दिव्यं वा यन्मे किल्विषमागतम् ।**
**सर्वं तदाज्यसंस्पर्शात् प्रणाशमुपगच्छतु ॥** इति

ततः कुशादीन्यादाय –

**ॐ अद्येहेत्यादि ...... गोत्रस्य सदारस्य ...... शर्मणो मम दुःस्वप्नदुर्निमित्त-विघ्नौघशमनार्थं तेजः प्रज्ञाशौर्ययशो-बलायुर्लक्ष्मीपुष्टि-वृद्धयर्थम् इदमवलोकितमुखमण्डलच्छायं ससुवर्णं काँस्यपात्रस्थमाज्यं मृत्युञ्जयदैवतं ...... गोत्राय ...... शर्मणे तुभ्यमहं सम्प्रददे ।** इति दद्यात् ।

ततः प्रार्थयेत् –

**ॐ कामधेनोः समुद्भूतं देवानामुत्तमं हविः ।**
**आयुर्वृद्धिकरं दातुराज्यं पातु सदैव माम् ॥**

दानप्रतिष्ठाद्रव्यं सकुशोदकमादाय –

> **ॐ अद्यकृतैतत् ससुवर्णकांस्यपात्रस्थितावलोकितमुखच्छायाऽऽज्यदानकर्मणः साङ्गतायै इदं ...... द्रव्यं ...... दैवतं दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे** ॥ इति दद्यात्

## (ट) गोदानम्

वरः सपत्नीक आचार्याय वरत्वेन गां (तन्निष्क्रयद्रव्यं वा) सङ्कल्पय दद्यात्। गां (निष्क्रयद्रव्यं वा) उपनीय –

ॐ नमो गोभ्य इति गां, नमो ब्रह्मण्यदेवायेति ब्राह्मणं च सम्पूज्य कुशादीन्यादाय –

**ॐ पूर्वसङ्कल्पसिद्धिरस्तु अद्येह ...... गोत्रः ...... शर्मा सपत्नीकोऽहं कृतस्य वैवाहिकहोमादिकर्मणः साद्गुण्यद्वारा यथोक्तफलावाप्तये इमां गां रुद्रदैवतां (इदं गोनिष्क्रयीभूतं रजतद्रव्यं चन्द्रदैवतं, ताम्रद्रव्यं सूर्यदैवतं वा) ...... गोत्राय ...... शर्मणे आचार्याय तुभ्यं सम्प्रददे। ॐ तत्सन्न मम,** इति दद्यात्। स्वस्तीति प्रतिवचनम्।

ततः कपिले सर्वदेवानामित्यादिना गां प्रार्थ्य दानप्रतिष्ठाद्रव्यं सकुशोदकं समादाय –

**ॐ अद्यकृतैतद् गोदानकर्मणः (गोनिष्क्रयीभूतद्रव्यदानकर्मणः) साङ्गतासिद्धये इदं द्रव्यं पूर्वोक्तगोत्राय शर्मणे ब्राह्मणा दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे** ॥ इति दद्यात्।

## (ठ) भूयसीदक्षिणादानम्

ततो भूयसीं दक्षिणामुपनीय **ॐ देयद्रव्याय नमः** इति सम्पूज्य कुशादीन्यादाय –

**पूर्वसङ्कल्पमुच्चार्य अद्यकृतैतद् वैवाहिकपूजनहवनादिसकलकर्मणः साङ्गतासिद्ध्यर्थमिमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो यथाभागं विभज्य दातुमहमुत्सृजे**। इति जले निधाय यथार्हं विभज्य दद्यात्।

कन्यापिताऽपि कन्याविवाहसाङ्गतायै पूर्णपात्रं, गां, भूयसीं च दद्यात्।

## (ड) विसर्जनम्[३८]

तत आचार्य आवाहितान् देवान् सम्पूज्य विसर्जयेत् –

> **ॐ यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम्।**
>
> **इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च** ॥ इति

३८ इदं विसर्जनम्, अभिषेचनम्, प्रसादप्रदानं चतुर्थीकर्मणोऽन्यत्र दिनान्तरे करणीयत्वे, यथाचारं विवाहवेद्यामेव तस्मिन्करणीये तु तदन्त एवेति बोध्यम्।

ततश्च आचार्यादयो ब्राह्मणाः सम्भूय सपत्नीकं वरम् कलशजलेन **ॐ सर्वे समुद्राः सरितः** इत्यादिकैः पौराणैः, **देवस्य त्वा सवितुः, द्यौः शान्तिः** इत्यादिभिर्वा वैदिकैर्मन्त्रैरभिषिच्य पुष्पादिकं रक्षाप्रतिसरं च गृहीत्वा **ॐ आब्रह्मन्** इत्यादिकान् मन्त्रान् पठित्वा प्रसादं साशीर्वचनमुभाभ्यां दद्युः ॥

## (ढ) अथ वधूवरविसर्जनम्

यथाचारं कृतभोजनौ विश्रान्तौ यथासमयं धृतवस्त्राभरणौ वधूवरौ सज्जीकृतविसर्जनोपचारं सन्निहितश्वश्रूश्वशुरादिपरिवारं वैवाहिकं देवागारं प्रविश्य आसने देवाभिमुखौ उपविश्य पाणी प्रक्षाल्य पुष्पाञ्जलिमादाय –

**ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**

**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ॥**

**ॐ दीपनारायणाय नमः** । इति दीपाय समर्पयेताम्,

ततः –

**ॐ वक्रतुण्ड महाकाय कोटिसूर्य समप्रभ ।**

**अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥**

**विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय ।**

**नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥**

**श्रीमन्मङ्गलमूर्तये गणाधिपतये नमः** । इति गणेशाय समर्पयेताम्,

ततः –

**ॐ नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय ।**

**सपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते ॥**

**ॐ वरुणाय नमः** । इति वरुणाय समर्पयेताम्,

ततः –

**ॐ ब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लोकपा ।**

**कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी ॥**

**वाराही घनघोरघर्घरमुखी ऐन्द्री च वज्रायुधा ।**

**चामुण्डा गणनाथरुद्रसहिता रक्षन्तु नो मातरः ॥**

**ॐ मातृकाभ्यो नमः** । इति मातृकाभ्यः समर्पयेताम् ।

ततः श्वश्रूर्जामातरं कन्यां च गन्धाक्षतैर्माल्यैश्चालङ्कृत्य दधिकदलीफलादिकं शकुनं प्राशयेत् । पूगीफलयज्ञसूत्रद्रव्यसहितेन वस्त्रेण धर्मग्रन्थिं च बध्नन्ती कन्यासंरक्षणं च सविनयं प्रार्थयेत् ।

ततो वरः श्वश्रूप्रभृतीः समाश्वास्य प्रणम्य च, उभयपक्षीये कलशभारादिके पुरतः प्रस्थिते, पितृभ्रात्रादिभिः पृष्ठेनोह्यमानां वधूमग्रतः कृत्वा स्वयं च केनचिदुह्यमानो देवागारात् गणेशादिकान् देवान् स्मरन् निष्क्रामेत् । कन्यापित्रादयश्च कन्यां वरं च त्रिवारं यज्ञमण्डपं भ्रामयित्वा यथाक्रमं शिबिकादौ सहैव पृथग्वा निवेशयेयुः ।

ततः सम्बन्धिद्वयसम्मेलनम् । स्वपक्षीयान् कृतवादनान् वादकजनान् कलशादिकाँश्च पुरस्कृत्य वधूमनु वरस्य प्रस्थानम् । अस्मिन्नवसरे शिबिकावाहकानां चोपरोधस्तत्सन्तोषणञ्च ।

॥ इति विवाहपद्धतिः ॥

## ८. अथ वरगृहप्रवेशनम्

वरभवनाङ्गणं प्राप्तयोर्वरवध्वोर्भगिनीद्वयकर्तृकं नीराजनम्, तत्कर्तृको द्वारोपरोधस्तत्सन्तोषणं च । व्रीहिपुञ्जेषु तण्डुलपिष्टपात्रे तिलतैलेन प्रज्वालितानां दीपानां चरणचङ्क्रमेण निर्वापणं कुर्वाणायाः वध्वा वैवाहिकदेवागारप्रवेशः । सपत्नीकस्य वरस्य पूर्वाऽऽवाहितपूजितदेवानां पूर्वरीत्या पुष्पाञ्जलिः । ततः श्वश्रूस्नुषयोः कबरीद्वयसंयोजनेन सह वसोः पवित्रमसीति वैदिकमन्त्रपाठसहितेन घृत (वसु) धारानिपातनम् । ततो वध्वाः श्वश्रूचरणयोर्वन्दनं सद्रव्यनिक्षेपः श्वश्रूकर्तृको वधूमुखावलोकश्च सति सम्भवे द्विगुणीकृतद्रव्यप्रत्यर्पणपूर्वकः ।

तत इतरेषां तथैव वन्दनं तथैव च मुखावलोकः (समयान्तरेऽप्येतत्कर्म क्रियते) । ततो वरमातुर्धर्मग्रन्थिमोचनम् । तदीयं द्रव्यं निधाय स्नुषया सह धान्यैर्घटीस्थापनपात्राधारीकृतैः अन्यैर्वा कैश्चन प्रस्थसम्भरणम्, तद्धान्यमादाय पुरःस्थितया वध्वा पश्चात् स्थितया श्वश्र्वा च धान्यकोशे (भकारीनामनि पात्रे) स्थापनञ्च ।

परतरेऽहनि (१७० पृष्ठोक्तरीत्या) शिलापुत्रस्य पूजनं, शय्यायां तस्य स्थापनं चेत्यादिकः सर्वेऽप्ययं पूर्वजैः प्रवर्तितो लौकिको विविधविधिकलापः प्रकर्तव्यः । त्रिरात्रमक्षारालवणाशिनौ स्याताम्, अधःशयीयाताम्, संवत्सरं न मिथुनमुपेयाताम्, द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः, ग्रामवचनं च कुर्युः, विवाहश्मशानयोर्ग्रामं प्रविशतात्, तस्मात्तयोर्ग्रामः प्रमाणम् इत्यादीनि श्रुतिसूत्रकृद्वचनानि ।

**येनाऽस्य पितरो याता येन याताः पितामहाः ।**

**तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यते ॥**

इत्यादीनि स्मृतिवचनानि च नोपेक्षणीयानि । कल्याणकामैर्मतिमद्भिरिति शम् ॥

॥ इति ॥

## ९. अथ चतुर्थीकर्मपद्धतिः

विवाहदिनाच्चतुर्थे दिने यथाचारं[३९] विवाहदिन एव वा चतुर्थीकर्म क्रियते ॥

अथ प्रयोगः – वधूवरौ अपररात्रे उद्वर्तनपूर्वकं (यथाचारं युगकाष्ठोपरि) स्नापयित्वा वस्त्राभरणैरलङ्कृत्य कर्मस्थाने प्राङ्मुखौ उपवेशयेत् ।

### (क) वेदीनिर्माणम् तत्संस्कारश्च

आचार्यः हस्तमात्रां चतुरस्रां भूमिं कुशैः परिसमूह्य तान् कुशान् ऐशान्यां निक्षिप्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्राः दक्षिणोपक्रमा उदगपवर्गास्तिस्रो रेखाः कृत्वा उल्लेखनक्रमेण अनामिकाङ्गुष्ठाभ्यां त्रिरुद्धृत्य वारिणा तं देशमभ्युक्ष्य काँस्यपात्रेण वैवाहिकम् (शिखिनामानम्) अग्निमानीय प्रत्यङ्मुखं संस्थाप्य पूजयेत् ।

### (ख) ब्राह्मणवरणम्

ततो वर आचम्य गन्धाक्षतपुष्पवस्त्रादिकां वरणसामग्रीं सकुशोदकं समादाय –

**ॐ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य ...... गोत्रः ...... शर्माऽहम् अद्यकर्तव्यचतुर्थीहोमकर्मणि कृताकृतावेक्षणादिकर्म कर्तुं नानानामगोत्रान् नानानामशर्मणो ब्राह्मणान् ब्रह्माचार्यत्वादिना युष्मान् वृणे ।**
इति वृत्वा तान् गन्धादिभिरभ्यर्च्य **ॐ वृताः स्थ** इति ब्रूयात् । ब्राह्मणैश्च **ॐ वृताः स्मः** इत्युक्ते **ॐ यथाविहितं कर्म कुरुत** इति ब्रूयात् । ते च **ॐ करवाम** इति ब्रूयुः ।

ततो ब्रह्माणं वेद्या दक्षिणतो दर्भासने उदङ्मुखं स्थापयेत् ।

### (ग) कुशकण्डिकाप्रयोगः

तत आचार्यः कुशकण्डिकाम् (अग्निस्थापनोक्तां) विधाय आघारहोमपर्यन्तं कृत्यं निर्वर्तयेत् ।

ततः पूर्वोपकल्पितास्तिस्रः समिधोऽग्नौ तूष्णीं समुत्थाय प्रक्षिप्य सपवित्रेण प्रोक्षण्युदकेन अग्निं पर्युक्ष्य उपयमनकुशान् वामहस्ते कृत्वा पातितदक्षिणजानुः ब्रह्मणा कुशेनाऽन्वारब्धः समिद्धतमेऽग्नौ स्रुवेण आघाराद्याश्चतस्र आहुतीर्जुहुयात् । तत्तदाहुत्यन्ते स्रुवावस्थितहुतशेषं प्रोक्षणीपात्रे संस्रावयेच्च ।

### (घ) आज्यहोमः

ॐ प्रजापतय इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता चतुर्थीकर्मणि आज्यहोमे विनियोगः ।

---

३९. सद्यःपक्षे विवाहमण्डपं तन्निष्क्रयप्रदानेन आचार्यतः स्वीकृत्य केचिदेतत्कर्म कुर्वन्ति ।

मनसा – **ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम** ॥१॥

ॐ इन्द्रायेति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्द इन्द्रो देवता चतुर्थीकर्मणि आज्यहोमे विनियोगः ।

**ॐ इन्द्राय स्वाहा, इदमिन्द्राय न मम** ॥२॥ (एतावाघारौ)

ॐ अग्नय इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः अग्निर्देवता चतुर्थीकर्मणि आज्यहोमे विनियोगः।

**ॐ अग्नये स्वाहा, इदमग्नये न मम** ॥१॥

ॐ सोमायेति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः सोमो देवता चतुर्थीकर्मणि आज्यहोमे विनियोगः ।

**ॐ सोमाय स्वाहा, इदं सोमाय न मम** ॥२॥ (एतावाज्यभागौ)

ततोऽग्नेरुत्तरतः प्रोक्षणीपात्रसमीपे जलपूर्णं पृथूदकं नाम पात्रं स्थापयेत् । दास्यमानाहुतिपञ्चके तत्तदाहुत्यन्ते तत्रैव हुतशेषस्य प्रक्षेपं च कुर्यात् ।

तत अनन्वारब्ध एव –

ॐ अग्ने प्रायश्चित्त इत्यादीनां पञ्चानां परमेष्ठी ऋषिः अग्निवायुसूर्यचन्द्रगन्धर्वा देवताः अनुष्टुप्छन्दश्चतुर्थीकर्मणि आज्यहोमे विनियोगः।

**ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणास्त्वा नाथकाम उपधावामि। यास्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा । इदमग्नये न मम** । इति हुत्वा पृथूदकपात्रे संस्रवं प्रक्षिपेत् (एवमग्रेऽपि) ॥१॥

**ॐ वायो प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामऽउपधावामि । यास्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं वायवे न मम** ॥२॥

**ॐ सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि । यास्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं सूर्याय न मम** ॥३॥

**ॐ चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि। यास्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं चन्द्राय न मम** ॥४॥

**ॐ गन्धर्व प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि । यास्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं गन्धर्वाय न मम** ॥५॥

ततः प्रजापतिं मनसा ध्यायन् आज्याभिघारितेन स्थालीपाकेन स्रुवस्थापितेन जुहुयात् –

**ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम** । प्रोक्षणीपात्रेऽपि प्रक्षेपः

ततो ब्रह्मणाऽन्वारब्ध साज्यं स्थालीपाकं स्रुवेणाऽऽदाय जुहुयात् –

**ॐ अग्नये स्विष्टकृते स्वाहा, इदमग्नये स्विष्टकृते न मम** । प्रोक्षणीपात्रेऽपि प्रक्षेपः

ॐ सत्वन्न इति वामदेव ऋषिरग्नीवरुणौ देवते त्रिष्टुप्छन्दश्चतुर्थीकर्मणि प्रायश्चित्तहोमे विनियोगः।

**ॐ सत्वन्नोऽअग्ने वमोभवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ** ।

**अवयक्ष्वनो व्वरुणꣳरराणो व्वीहिमृडीकꣳसुहवो नऽएधि स्वाहा** ॥

**ॐ इदमग्नीवरुणाभ्यां न मम** ।

ॐ अयाश्चाग्न इति वामदेव ऋषिरग्निर्देवता त्रिष्टुप्छन्दश्चतुर्थीकर्मणि प्रायश्चित्तहोमे विनियोगः।

**ॐ अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्वमयाऽअसि** ।

**अयानो यज्ञं वहास्ययानो धेहि भेषजꣳस्वाहा** ॥ **इदमग्नये न मम** ।

ॐ ये ते शतमिति वामदेव ऋषिस्त्रिष्टुप्छन्दो वरुणः सविता विष्णुर्विश्वेदेवा मरुतः स्वर्काश्च देवताश्चतुर्थीकर्मणि सर्वप्रायश्चित्तहोमे विनियोगः।

**ॐ ये ते शतं व्वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः** ।

**तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा** ॥

**इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम** ।

ॐ उदुत्तममिति शुनःशेप ऋषिस्त्रिष्टुप्छन्दो वरुणो देवता चतुर्थीकर्मणि सर्वप्रायश्चित्तहोमे विनियोगः।

**ॐ उदुत्तमं वरुणपाशमस्मदाधमं व्विमध्यमꣳश्रथाय** ।

**अथाव्वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा** ॥ **इदं वरुणाय न मम** ।

ॐ प्रजापतय इति प्रजापतिर्ऋषिर्देवता च त्रिष्टुप्छन्दश्चतुर्थीकर्मणि सर्वप्रायश्चित्तहोमे विनियोगः।

मनसा – **ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम** ।

ततः संस्रवप्राशनम्, आचमनं च वधूवरयोः ॥

## (ङ) पूर्णपात्रदानम्

सकुशोदकं पूर्णपात्रमादाय –

**ॐ अद्यकृतैतच्चतुर्थीहोमकर्मणोऽपूर्णस्य पूरणार्थमिदं सद्रव्यफलब्रह्मसूत्रं पूर्णपात्रं प्रजापतिदैवतं ...... गोत्राय ...... शर्मणे ब्रह्मरूपाय तुभ्यमहं सम्प्रददे** । इति दद्यात्, स्वस्तीत्युच्चार्य ब्राह्मणः प्रतिगृह्णीयात् ।

### (च) प्रणीताविमोकः

ॐ सुमित्रिया, दुर्मित्रिया इति द्वयोर्यजुषोः प्रजापतिर्ऋषिरापोदेवताः प्रणीताविमोके विनियोगः ।

**ॐ सुमित्रिया नऽ आप ओषधयः सन्तु ।**

इति सपवित्रेण प्रणीताप्रोक्षण्योर्जलेन वधूवरौ अभिषिच्य प्रणीतापात्रम् ऐशान्यां न्युब्जीकुर्यात् –

**ॐ दुर्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टि यं च वयं द्विष्मः ।**

### (छ) बर्हिर्होमः

तत आस्तरणक्रमेण बर्हींषि समानीय घृतेनाऽभिधार्य हस्तेन जुहुयात् मन्त्रेणानेन –

ॐ देवा गातुविद इति मन्त्रस्य वनस्पतिर्ऋषिर्विराट्छन्दो वातो देवता बर्हिर्होमे विनियोगः ।

**ॐ देवागातुविदो गातुं वित्त्वा गातु मित । मनसस्पतऽइमन्देवयज्ञꣳस्वाहा वातेधाः ॥**

### (ज) वधूमभिषेञ्चनम्ः

ततः पृथूदकपात्रस्थजलेन साम्रपल्लवेन समन्त्रपाठं वधूमभिषिञ्चेद्वरः –

ॐ यात इत्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः वधूर्देवताऽभिषेचने विनियोगः ।

**ॐ या ते पतिघ्नी प्रजाघ्नी पशुघ्नी यशोघ्नी गृहघ्नी निन्दिता तनूः ।**

**जारघ्नीं तत एनां करोमि सा जीर्य त्वं मया सह** ......[४०] **देवि !!**

### (झ) चरुशेषभोजनम्[४१]

ततो मनसा मन्त्रं जपन् वरश्चतुर्वारं स्वभुक्तशेषं स्थालीपाकं वधूं प्राशयेत् –

ॐ प्राणैस्त इति मन्त्रस्य प्रजापतिर्ऋषिर्यजुश्छन्दो वधूर्देवता चरुशेषभोजने विनियोगः ।

**ॐ प्राणैस्ते प्राणान्त्सन्दधामि** (१.

**ॐ अस्थिभिस्ते अस्थीनि सन्दधामि** (२.

**ॐ मांसैस्ते मांसानि सन्दधामि** (३.

**ॐ त्वचा ते त्वचं सन्दधामि** (४.

तत आचामेत्, आचामयेच्च ।

---

४०. एतत्स्थाने वध्वाः पूर्वधृतं नाम, अस्मिन्नेवसमये कल्पितं वा नाम वरो गृह्णीयात् ।

४१. अत्र चरुशेष भोजन विधि लोके वधूकर्तृकं वरजुष्टमोदक (कसार इति) खण्ड भक्षणम् (जूठो ख्वाउने) इतिरीतिः ।

## (ञ) हृदयालम्भनम्

ततो वरः वधूदक्षिणस्कन्धतो नीतेन स्वदक्षिणपाणितलेन वध्वा हृदयं स्पृशेत् ।

तत्र मन्त्रः –

ॐ यत्ते इति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो वधूर्देवता हृदयालम्भने विनियोगः ।

**ॐ यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम् । वेदाहं तन्मां तद्विद्यात् पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतम्** ॥ इति

अस्मिन्नवसरे यथाचारं कङ्कणमोचनम्, अञ्चलग्रन्थिमोचनं (द्यूतग्रन्थिमोचनं) च भवति ।

## (ट) पूर्णाहुतिः

उत्थाय होता ब्रह्मणाऽन्वारब्धः सपत्नीकेन वरेण च पादयोरन्वारब्धः स्रुवे फलादिकं निधाय अविच्छिन्नया घृतधारया जुहुयात् –

ॐ मूर्धानमित्यस्य भरद्वाज ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता चतुर्थीकर्मणि पूर्णाहुतिहोमे विनियोगः ।

**ॐ मूर्धानन्दिवोऽअरतिं पृथिव्या वैश्वानरमृतऽआजातमग्निम्** ।

**कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः स्वाहा** ॥ इति

## (ठ) तिलककरणम्

ततः स्रुवेण दग्धं चरुम् (भस्म) आनीय दक्षकरानामिकया वधूवरयोस्तिलकं कुर्यात् –

ॐ त्र्यायुषमिति नारायण ऋषिरुष्णिक्छन्द आयुर्देवता तिलककरणे विनियोगः ।

| | |
|---|---|
| **ॐ त्र्यायुषञ्जमदग्नेः** | (इति ललाटे) |
| **ॐ कश्यपस्य त्र्यायुषम्** | (इति ग्रीवायाम्) |
| **ॐ यद्देवेषु त्र्यायुषम्** | (इति दक्षिणबाहुमूले) |
| **ॐ तन्नोऽअस्तु त्र्यायुषम्** | (इति हृदि) |

## (ड) भूयसीदक्षिणादानम् विसर्जनञ्च

ततो वरः कृतस्य होमकर्मणः साङ्गतायै पूर्वोक्तरीत्या गां भूयसीं दक्षिणां च सङ्कल्पय दद्यात् । ब्राह्मणाश्च **ॐ यान्तु देवगणाः** इत्यादिना पूजितान् देवान् मन्त्रेणानेन च वह्निं विसर्जयेत्–

**ॐ यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा** ।

**एषते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहा** ॥ इत्यनेन विसृज्य,

कलशजलेन वधूवरावभिषिच्य गन्धपुष्पादिभिराशीर्वादं समन्त्रपाठं दद्युः ।

वरश्च सपत्नीकः साञ्जलिबन्धः प्रार्थयेत् –

**ॐ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।**
**न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ ॐ अच्युतायः नमः- ३**
**ॐ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।**
**हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥ ॐ विष्णवे नमः- ३**

अथाऽऽचाराद्वधूः पत्युः पादौ प्रक्षाल्य तदुदकं पिबेत् । ततश्च यथाकुलाचारं कुर्वाणौ वधूवरौ यथासुखं तिष्ठेताम् ॥

॥ इति वैवाहिकं चतुर्थीकर्म ॥

## अभ्यासः

१. **शब्दार्थान् लिखत**

पटलाञ्छनम् । आप्तः । मधुपर्कः । असञ्चरे । स्थालीपाकः ।

२. **अधस्तनशब्दान् प्रयुज्य वाक्यरचना विधेया**

स्रक् । त्रिः । निधाय । सीमन्तः । पटः । शूर्पः ।

३. **परस्परं मेलयत**

| | |
|---|---|
| पूर्वे | शिखिरः |
| आग्नेय्याम् | हिमाचलः |
| दक्षिणे | वैराटः |
| नैर्ऋत्याम् | सुमेरुः |
| पश्चिमे | उदयाचलः |
| वायव्याम् | मरुतः |
| उत्तरे | कुमेरुः |
| ऐशान्याम् | शारदः |
| | विन्ध्याचलः |

४. **कोष्ठस्थं सर्वोपयुक्तं पदमवचित्य वाक्यपूर्णो विधेयः**

(क) स्वयम्वरकर्मणि...... पूज्यते । (माला, छाया, गोदा, चित्रा)

(ख) लग्नग्रन्थिं ....... बध्नाति । (आचार्यः, वरः, वधूः, ब्राह्मणः)

(ग) धर्मग्रन्थिं ....... बध्नाति । (पिता, माता, भ्राता, जामाता)

(घ) वैवाहिकस्याग्नेर्नाम ......... । (बलदः, दारुणः, योजकः, शोभनः)

(ङ) वैवाहिकं कलशभारं ......धारयति । (वाचालः, मौनी पुरुषः, वृद्धपुरुषः, कन्या)

५. **पाठ्यांशमाधृत्य रिक्तस्थानं पूरयत**

(क) अव्यङ्ग्ये ......................... ।

..................................सन्निधौ ॥

(ख) दूरदेशागतो........................... ।

कालक्षेपो.......................... ॥

(ग) गौरी कन्यामिमां..................... ।

................ तुभ्यं ............. ॥

(घ) मातरं वसुधां.................महेश्वरम् ।

................................. यथेप्सितान् ॥

(ङ) ........................ पूजामादाय पार्थिवीम् ।

इष्टकाम.................................च ॥

६. **प्रश्नान् समुत्तरयत**

(क) पाठ्यांशमनुसृत्य स्वयम्वरविधिं लिखत ।

(ख) वाग्दानस्वरूपं प्रदर्शयत ।

(ग) पटलाञ्छनकर्मणो महत्त्वं प्रतिपादयत ।

(घ) कन्यादानं कथं विधीयते ? निरूपयत ।

(ङ) पाणिग्रहणमन्त्राः के ?

(च) 'आरोहेममश्मानम्' इति मन्त्रस्य विनियोजनस्थलं निर्दिशत ।

(छ) शिलापूजने प्रयुक्ता मन्त्राः के ?

(ज) सिन्दूरार्पणं केन मन्त्रेण विधीयते ?

(झ) 'मम व्रते ते' इति मन्त्रस्य कुत्र विनियोगः ?

(ञ) वरवरणे प्रयोज्यमानानि द्रव्याणि कानि ? ग्रन्थाधारेण लेख्यानि ।

(ट) स्थालीपाकभोजनप्रकारं निर्दिशत ।

## प्रयोगाभ्यासः

१. पुण्याहवाचनमन्त्राणां सस्वरं वाचनं कुरुत ।

२. पाठ्यांशगतान् मन्त्रान् स्तोत्राँश्च कक्षायां श्रावयत ।

३. विद्यालयस्य प्राङ्गणे विवाहकर्मणो रङ्गवल्लीं विरचय्य प्रदर्शयत ।

४. शिक्षकस्य साहाय्येन कुशद्वारा पवित्रादिनिर्माणाभ्यासं कुरुत ।

५. वरवरणी कथं क्रियते ? प्रयोगेण प्रदर्शयत ।

६. कन्यादानकर्मणि प्रवृत्तानां वधूवरपित्रादीनां निवेशस्थितिः कीदृशी भवति ? कक्षायां प्रदर्शयत ।

७. लाजाहवनस्वरूपस्याभिनेयो विधेयः ।

८. युष्माकं गृहे समुदाये वाऽऽयोजिते विवाहकर्मणि भागं गृहीत्वाऽभ्यासो विधेयः ।

# चतुरशीतिपूजा

ईशान — धर्म, सनक | पूर्व — अधर्म, इन्द | आग्नेय — अग्नि, सनन्दन

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| उत्तर<br>कुबेर, अनैश्वर्य | 1 | 2 | 3 | 4 | 5 | 6 | 7 | 8 | 9 | दक्षिण<br>यम, अज्ञान |
| | 32 | 33 | 34 | 35 | 36 | 37 | 38 | 39 | 10 | |
| | 31 | 56 | 57 | 58 | 59 | 60 | 61 | 40 | 11 | |
| | 30 | 55 | 72 | 73 | 74 | 75 | 62 | 41 | 12 | |
| | 29 | 54 | 71 | 80 | ; j{f] eb\|1 | 76 | 64 | 42 | 13 | |
| | 28 | 53 | 70 | 79 | 78 | 77 | 64 | 43 | 14 | |
| | 27 | 52 | 69 | 68 | 67 | 66 | 61 | 44 | 15 | |
| | 26 | 51 | 50 | 49 | 48 | 47 | 46 | 45 | 16 | |
| | 25 | 24 | 23 | 22 | 21 | 20 | 19 | 18 | 17 | |

नैऋत्य — वैराग्य, सनातन | पश्चिम — अवैराग्य, वरुण | वायव्य — सनत्कुमार, ऐश्वर्य

## चतुरशीतिपूजा र सहस्रचन्द्रदर्शनोद्यापनपद्धतिः

पूर्वदिने मातृकापूजनादिकं कृत्वा मण्डपं निर्माय सम्पूज्य चापरदिने चतुरशीतिपूजा कर्तव्या ।

### (क) प्रतिज्ञासङ्कल्पः

ॐ अद्येत्यादिदेशकालौ स्मृत्वा .....गोत्रस्य .....प्रवरस्य शुक्लयजुर्वेदान्तर्गत-माध्यन्दिनीय-वाजसनेयशाखाध्यायिनश्चतुरशीतिवर्षे वर्तमानस्य दृष्टपूर्णचन्द्रसहस्रस्य ......शर्मणो मम श्रीचन्द्रहरेः प्रसादात् पुत्रपौत्रादीनामायुरारोग्यैश्वर्योदयाद्यभिवृद्ध्यर्थं स्वस्य च कृत्याकृत्यभोज्याभोज्यगम्यागम्यपेय्यापेय्यवाच्यावाच्यकर्माननुसन्धानवशाद् उत्पन्नानां ज्ञाताज्ञात-शुष्कार्द्रलघुगुर्वादिपापानां क्षयपूर्वकं चन्द्रमार्गेण श्रीहरिपदप्राप्त्यर्थं दीपकलशगणेशादिपूजनपूर्वकं चन्द्रसहस्रपूजनं तदङ्गत्वेन हवनं ब्राह्मणदम्पत्योः पूजनं चाहं करिष्ये ।

## (ख) दीपादीनां पूजनम्

दीपं प्रज्वाल्य स्वस्तिवाचनं कृत्वा कुण्डे वह्निं संस्थाप्य चतुरः पञ्च षोडशो वा ब्राह्मणान् वृत्वा पुण्याहं वाचयित्वा दीपगणेशकलशग्रहमातृकादीनां सर्वतोभद्रमण्डल-वास्तुमण्डलस्थदेवतानां च पूजां विधाय चन्द्रसहस्रपूजनं कुर्यात्।

## (ग) प्रतिमास्थापनप्रकारः

शुभधान्योद्भूतैरक्षुण्णैस्तण्डुलैः सहस्रसङ्ख्याकाश्चन्द्रमण्डलनिभा वेद्याः आस्तीर्णश्वेत-वस्त्रोपरि कार्याः। तासु च प्रत्येकं रौप्यमयान् कलशान् स्थापयित्वा तेषां मुखेषु रौप्यमयीः स्थालीश्च संस्थाप्य षोडशमाषपरिमितेन रौप्येण प्रत्येकं निर्मिता चन्द्रबिम्बनिभाः षोडशकलायुताः प्रतिमाः स्थापयेत्। तत्प्रकारो यथा –

मध्ये तण्डुलोपरि गोदुग्धपूरितं रौप्यकलशमेकं स्थापयेत्। तस्य मुखे रौप्यस्थाल्यां चन्द्रप्रतिमां न्यसेत्। तस्य कलशस्य चतुष्कोणेषु (आग्नेयादिषु) चत्वारः कलशाः स्थाप्याः। तेषु च पूर्ववच्चतस्रः स्थालीः संस्थाप्य तासु एकैकां प्रतिमां स्थापयेत्। सति सम्भवे एतेऽपि कलशा गोदुग्धेनैव पूरणीयास्तदभावे जलेन पूरणीयाः। किञ्चिद् गोदुग्धं च तेषु निक्षेप्तव्यम्। ततो बहिः पूर्णचन्द्राकाराः श्वेततण्डुलमया विस्तृता ९७९ संख्याका वेदीर्निर्माय तासु च सति सम्भवे पूर्ववत् कलशप्रतिमादिकं स्थापयेत्। तदसम्भवे ९७९ मृत्कुम्भेषु पूर्णपुटकेषु वा जलं निक्षिप्य तेषु प्रतिमास्वरूपाणि रौप्यखण्डानि द्रव्याणि वा स्थापयेत्। असम्भवे तु पूर्वोक्ताः षोडशकलशादयोऽपि मृदादिका एवोपयोक्तव्याः। ताम्रकलशानां प्रयोगे तु सजलदुग्धेन पूरणीयाः। ततो मध्यकलशे चन्द्रहरेः प्रतिमायां प्राणप्रतिष्ठां कुर्यात्।

## (घ) प्राणप्रतिष्ठा

आदौ विनियोगः –

**अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषय ऋग्यजुःसामानि छन्दांसि जगत्सृष्टिः प्राणशक्तिर्देवता आं बीजम्, ह्रीं शक्तिः क्रौं कीलकं प्राणप्रतिष्ठापने विनियोगः।**

ततो दक्षिणहस्ताङ्गुलीभिः प्रतिमां स्पृष्ट्वा प्राणप्रतिष्ठां कुर्यात् –

**ॐ अस्यै प्राणा प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च।**

**अस्यै देवत्वमर्चायै मामहेति च कश्चन॥**

इति प्राणान् प्रतिष्ठाप्य न्यासं कुर्यात् –

**ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं चन्द्रहरेः प्राणा इह प्राणाः।**

**ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं चन्द्रहरेः जीव इह स्थितः।**

**ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं चन्द्रहरेः सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुः-**

**श्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।**

**ॐ मनोजूतिर्जुषताम्** ..... **मौँ३ प्रतिष्ठ** ॥

ततः कलान्यासः –

**ॐ भूर्भुवःस्वः यमुनातीरोद्भव आत्रेय सगोत्र शुक्लवर्ण सम्पूर्णषोडशकलायुत सोम इहागच्छ, इह तिष्ठ, यावत् पूजां करोमि, तावत् त्वं सुस्थिरो भव, सुप्रसन्नो भव, सुवरदो भव** ॥

इत्यावाह्य दक्षिणहस्ताङ्गुलीभिरेव प्रतिमां सर्वतः स्पृशन् मन्त्रमिमं पठेत् –

**ॐ इमन्देवा असपत्नꣳसुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्रमस्यै विशऽएष वोमी राजा सोमोऽस्माकं ब्राह्मणानाꣳराजा** ॥

ततः स्वशरीरशुद्धये पञ्चदशवारं प्रणवं जपेत् ।

ततः सोमसूक्तेन प्रत्यृचं पुराणमन्त्रैश्च प्रतिमन्त्रम् आसनपाद्यार्घ्याचमनादिभिस्ततो धूपदीपनैवेद्ययज्ञोपवीतताम्बूलपूगीफल-वस्त्रद्रव्यमाल्यादिभिश्च षोडशोपचारैश्चन्द्रहरेः पूजां विधाय शङ्खघण्टादिवादनं कृत्वा षोडशनामभिः पुनस्तस्य पूजां कुर्यात् । तद्यथा -

## (ङ) चन्द्रहरेः पूजनम्

**भो चन्द्रहरे ! इहागच्छ, इह तिष्ठ, यावत् पूजां करोमि, तावत् त्वम् अस्यां प्रतिमायां सुस्थिरो भव, सुप्रसन्नो भव, सुवरदो भव ।**

इत्यावाह्य कुशादीन्यादाय विनियोजयेत् -

**त्वं सोम इत्यादि सोमसूक्तस्य त्रयोविंशत्यृचः गौतमऋषिर्गायत्र्युष्णिक्त्रिष्टुप्छन्दांसि सोमो देवता जपे विनियोगः** । इति विनियोगं कृत्वा,

१. आसनम् –

**त्वं सोम प्रचिकितो मनीषा त्वं रजिष्ठमनुनेषि पन्थाम् ।**
**तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः** ॥
**चन्द्रदेव नमस्तुभ्यं जगतां शान्तिदायक ।**
**आसनं वै मया दत्तं गृहाण रोहिणीप्रिय** ॥
आसनं समर्पयामि, चन्द्रहरये नमः ।

२. पाद्यम् –

**त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं दक्षैः सुदक्षो विश्ववेदाः ।**
**त्वं वृषा वृषत्वेभिमहित्वा द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः** ॥

**शशाङ्क रेवतीनाथ प्राणिनां तापहारक ।**

**पाद्यं गृहाण मद्दत्तं सर्वपापहरो भव ॥**

पाद्यं समर्पयामि, चन्द्रहरये नमः।

३. अर्घ्यम् –

**राज्ञो नु ते वरुणस्य व्रतानि बृहद्गभीरं तव सोम धाम ।**

**शुचिष्ट्वमसि प्रियो न मित्रो दक्षाय्यो अर्यमेवासि सोम ॥**

**दधिगन्धजलैर्युक्तमिदमर्घ्यं पुरः स्थितम् ।**

**शशिन् आदेहि भोगार्थं मम शान्तिप्रदो भव ॥**

अर्घ्यं समर्पयामि, चन्द्रहरये नमः।

४. आचमनीयम् –

**या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वौषधीष्वप्सु ।**

**तेभिर्नो विश्वैः सुमना अहेडन्राजन्त्सोम प्रति हव्या गृभाय ॥**

**हिमाद्रिदुहितुः शुद्धं शीतलं वारि मङ्गलम् ।**

**दत्तमाचमनार्थं वै सोमेदं प्रतिगृह्यताम् ॥**

आचमनीयं जलं समर्पयामि, चन्द्रहरये नमः।

ततः पञ्चामृतस्नानम् । तत्रादौ,

५. पयःस्नानम् –

**ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥**

**देवाद्यैर्वन्दिता धेनुः सर्वपापप्रणाशिनी ।**

**तत्क्षीरस्नापितो देव नित्यं मे वरदो भव ॥**

पयःस्नानं समर्पयामि,

पयःस्नानान्ते **ॐ आपोऽअस्मान्**... इति शुद्धोदकस्नानं समर्पयामि, चन्द्रहरये नमः।

६. दधिस्नानम् –

**ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ।**

**सुरभिनो मुखाकरत् प्रणऽआयूꣳषि तारिषत् ॥**

**कामतोऽकामतो वापि यन्मया दुष्कृतं कृतम् ।**

**तत्सर्वं विलयं यातु दधिस्नानेन सर्वदा ॥**

दधिस्नानं समर्पयामि,

दधिस्नानान्ते **ॐ आपोऽअस्मान्...** इति शुद्धोदकस्नानं समर्पयामि, चन्द्रहरये नमः।

७. घृतस्नानम् –

**ॐ घृतम्मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।**

**अनुष्वधमावह मादयस्व स्वाहा कृतं वृषभ वक्षि हव्यम् ॥**

**रसानामुत्तमं त्वाज्यं देवानां च सदा प्रियम् ।**

**तेन त्वं स्नापितो देव निधिकान्तिप्रदो भव ॥**

घृतस्नानं समर्पयामि,

घृतस्नानान्ते **ॐ आपोऽअस्मान्...** इति शुद्धोदकस्नानं समर्पयामि, चन्द्रहरये नमः।

८. मधुस्नानम् –

**ॐ मधुवाताऽऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥**

**मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः । मधु द्यौरस्तु नः पिता ॥**

**मधुमान्नो वनस्पतिर्मधुमाँऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥**

मधुस्नानं समर्पयामि,

मधुस्नानान्ते **ॐ आपोऽअस्मान्...** इति शुद्धोदकस्नानं समर्पयामि, चन्द्रहरये नमः।

९. शर्करास्नानम् –

**ॐ अपाꣳरसमुद्वयसꣳसूर्ये सन्तꣳसमाहितम् । अपाꣳरसस्य यो रसस्तं वो गृह्णाम्युत्तमुपयामगृहीतोसीन्द्रायत्वा जुष्टङ्गृह्णाम्येषते योनिरिन्द्राय त्वा जुष्टतमम् ॥**

शर्करास्नानं समर्पयामि,

शर्करास्नानान्ते **ॐ आपोऽअस्मान्...** इति शुद्धोदकस्नानं समर्पयामि, चन्द्रहरये नमः।

१०. वस्त्रम् –

**गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः । सुमित्रः सोम नो भव ॥**

**शुक्लाम्बरधरो नित्यं शुक्लवर्ण च शोभन ।**

**शुक्लवस्त्रं मया दत्तं परिधेहि शुभप्रद ॥**

वस्त्रं समर्पयामि, चन्द्रहरये नमः।

११. यज्ञोपवीतम् -

**सोम रारन्धिनो हृदि गावो न यवसेष्वामर्य इवस्व औक्ये ।**

**जैवातृक निशानाथ शम्भुचूडास्थितः शुभः ।**

**यज्ञोपवीतं देवेश मया दत्तं गृहाण भोः ॥**

यज्ञोपवीतं समर्पयामि, चन्द्रहरये नमः॥

१२. गन्धम् –

**त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो असि क्रतुः ॥**

**मलयाचलसम्भूतं सुगन्धं चन्दनं शुभम् ।**

**इन्दो दत्तं मया तुभ्यं गृहीत्वा कीर्तिदो भव ॥**

गन्धं समर्पयामि, चन्द्रहरये नमः ।

१३. अक्षतान् –

**त्वं च सोम नो वशो जीवातुं न मरामहे । प्रियस्तोत्रो वनस्पतिः ॥**

**अक्षतानक्षतो भूत्वाऽऽदेहि कुमुदबान्धव ।**

**अक्षतं मे यशः कुर्याः सन्ततीश्च सदैव मे ॥**

अक्षतान् समर्पयामि, चन्द्रहरये नमः ।

१४. पुष्पाणि –

**त्वं सोम महे भगं त्वं यून ऋतायते । दक्षं दधासि जीवसे ॥**

**सुगन्धीनि सुपुष्पाणि विधो कालोद्भवानि च ।**

**आयच्छ गन्धवत्तेषां मम कीर्तिं प्रवर्धय ॥**

पुष्पाणि पुष्पमालां च समर्पयामि, चन्द्रहरये नमः ।

१५. धूपम् –

**त्वं नः सोम विश्वतो रक्षा राजन्नघायतः । न रिष्ये त्वावतः सखा ॥**

**धूपोऽयं कुङ्कुमैर्युक्तो गुग्गुलो वृक्षसम्भवः ।**

**सुधांशो गृह्यतामेष मया दत्तः सुसौरभः ॥**

धूपं समर्पयामि, चन्द्रहरये नमः ।

१६. दीपम् –

**सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे । ताभिर्नोऽविता भव ॥**

**दीपोऽयं गोघृताक्तश्च तिमिरान्तकरः परः ।**

**शुभ्रांशो स्वीकुरुष्व त्वं ममाज्ञानहरो भव ॥**

दीपं समर्पयामि, चन्द्रहरये नमः ।

१७. नैवेद्यम् –

**इमं यज्ञमिदं वचो जुजुषाण उपागहि । सोम त्वं नो वृधे भव ॥**

**मोदकं शस्कुलीं पूपं संयावं कर्णशस्कुलीम् ।**

**पायसं च गृहाण त्वमोषधीश नमो नमः ॥**

नैवेद्यं समर्पयामि, चन्द्रहरये नमः ।

१८. पुनराचमनीयम् –

**सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । सुमृडीको न आविश ॥**

**निशापते नमस्तुभ्यं सुस्वादु शीतलं जलम् ।**

**पुनराचमनार्थं वै दत्तं ते प्रतिगृह्यताम् ॥**

पुनराचमनीयं समर्पयामि, चन्द्रहरये नमः ।

१९. ताम्बूलम् –

**उरुष्याणो अभिशस्तेः सोम नि पाह्यं हसः । सखा सुशेव एधि नः ॥**

**खादिरादिसमायुक्तं तेजोत्साहप्रदायकम् ।**

**ताम्बूलं प्रददे तुभ्यं कलानां निधये नमः ॥**

ताम्बूलं समर्पयामि, चन्द्रहरये नमः।

२०. पूगीफलम् –

**आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥**

**मुखशुद्धिकरं देव पूगीफलमिदं तव ।**

**दीयते श्रद्धया मिष्टं द्विजराज नमोऽस्तु ते ॥**

पूगीफलं समर्पयामि, चन्द्रहरये नमः ।

२१. द्रव्यम् –

**यः सोम सख्ये तव रराणद्देव मर्त्यः । तं दक्षः सचते कविः ॥**

**येन तुष्यन्ति राजानो भिक्षुका धनिनोऽपि वा ।**

**देवाश्च तत्प्रयच्छामि द्रव्यं चन्द्राय ते नमः ॥**

द्रव्यदक्षिणां समर्पयामि, चन्द्रहरये नमः ।

ततो नीराजनम्, चामरम्, व्यजनम्, प्रदक्षिणा च ।

## (च) षोडशनामभिश्चन्द्रपूजनम्

एवं षोडशोपचारैश्चन्द्रहरेः पूजां विधाय पुनः षोडशनामभिश्चन्द्रपूजां कुर्यात्। तद्यथा –

१. ॐ हिमांशवे नमः ।

२. ॐ सोमचन्द्राय नमः।

३. ॐ चन्द्राय नमः।

४. ॐ विधवे नमः

५. ॐ कुमुदबन्धवे नमः ।

६. ॐ सुधांशवे नमः ।

७. ॐ ओषधीशाय नमः।

८. ॐ अब्जाय नमः।

९. ॐ मृगाङ्काय नमः।

१०. ॐ कलानिधये नमः।

११. ॐ नक्षत्रनाथाय नमः।

१२. ॐ शर्वरीपतये नमः।

१३. ॐ जैवातृकाय नमः।

१४. ॐ द्विजराजाय नमः।

१५. ॐ रोहिणीवल्लभाय नमः।

१६. ॐ इन्दवे नमः ।

एवं नाममन्त्रेण पूजां विधाय पुष्पादिकं गृहीत्वा सोमसूक्तेन एभिः पौराणमन्त्रैश्च स्तुतिं कुर्यात् ।

## (छ) प्रार्थना –

**आप्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः । भवानः सुश्रवस्तमः सखा वृधे ॥**

**सं ते पयांसि समुयन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः ।**

**आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥**

**या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ।**

**गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्यान् ॥**

**सोमो धेनुꣳसोमोऽअर्वन्तमाशुꣳसोमो वीरं कर्मण्यं ददाति ।**

**सादन्यं विदथ्यꣳसभेयं पितृश्रवणं यो ददाशदस्मै ॥**

**अषाढं युत्सु पृतनासु पप्रिं स्वर्षामप्सां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥**

**त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।**

**त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वितमो ववर्थ ॥**

**देवेन नो मनसा देव सोम रायो भागꣳसहसावन्नभि युध्य ।**

**मा त्वा तनदीशिष्ये वीर्यस्योभयेभ्यः प्रचिकित्सागविष्टौ ॥** इति ।

**हिमांशवे नमश्चैव सोमचन्द्राय वै नमः ।**

**चन्द्राय विधवे नित्यं नमः कुमुदबान्धवे ॥**

**सुधांशवे च सोमाय ओषधीशाय वै नमः ।**

**नमोऽब्जाय मृगाङ्काय कलानां निधये नमः ॥**

**नमो नक्षत्रनाथाय शर्वरीपतये नमः ।**

**जैवातृकाय सततं द्विजराजाय वै नमः ।**

**इन्दवे च नमस्तुभ्यं रोहिणीवल्लभाय च ॥** इति ।

इति च पठित्वा स्वाञ्जलौ गृहीतं पुष्पादिकं चन्द्रहरये समर्पयेत् ।

## (ज) शङ्खजलनिवेदनम्

पुष्पफलचन्दनसहितं शङ्खतोयं चन्द्रहरये समर्पयेत् –

**नमस्ते मासमासान्ते जायमानः पुनः पुनः ।**

**गृहाणार्घ्यं शशाङ्क त्वं रोहिण्या सहितो मम ॥**

इति पुष्पफलचन्दनसहितं शङ्खतोयं चन्द्रहरये समर्पयेत् ।

तदनन्तरम् चतुष्कोणेषु स्थापितेषु चतुर्ष्वपि कलशेषु चन्द्रस्य पूजनं कुर्यात् । पूर्वोक्तेनैव विधिना षोडशष्वपि कलशेषु षोडशोपचारेण चन्द्रस्य पूजां कृत्वा अवशिष्टेष्वपि कलशेषु पर्णपुटकेषु मृत्कुम्भेषु वा तन्त्रेण चन्द्रस्य पूजां कुर्यात् । सोममन्त्रेण सहस्रसङ्ख्यका आहुतीर्जुहुयात् । सोमसूक्तं सोमोत्पत्तिं च पाठयेत् । मिष्टान्नपक्वान्नादिभिर्ब्राह्मणान् भोजयित्वा स्वयं च प्रसादीभूतं पवित्रमन्नं सम्भुज्य चन्द्रोत्पत्तिकथां शृण्वानो नियमेनैव दिनं नीत्वा रात्रौ च अधः सुप्त्वा अपरस्मिन् दिने भगवतो लक्ष्मीसहितस्य नारायणस्य पूजां कुर्यात् ।

## (फ) शय्यादानम्

खट्वादिकमानीय तस्योपरि हंसतूल्यादिसमायुक्तां शय्यां पूर्वारायतामास्तीर्य शिरःप्रदेशे निद्राकलशाख्यं घृतपूर्णं ताम्रकलशं निधाय पादप्रदेशे ज्वलन्तं चतुर्वर्तियुतं दीपं संस्थाप्य अधःप्रदेशे कर्पूरादिवासितं जलकलशं संस्थाप्य तस्य पार्श्वयोः वर्षभोग्यपरिमितं यथाशक्ति वाऽन्नं द्विदल-व्यञ्जन-घृत-लवणादीनि भोज्यवस्तूनि पाकस्थाल्यादीनि भाण्डानि सप्तधान्यादीनि च संस्थाप्य शय्योपरि अग्न्युत्तारितां पञ्चामृतस्नापितां पञ्चगुञ्जाऽन्यूनसुवर्णनिर्मितां लक्ष्मीनारायणप्रतिमां संस्थाप्य देयं ब्राह्मणमुदङ्मुखमुपवेशयेत् । पुण्यकाले सूपलिप्तायां भूमौ प्राङ्मुख उपविश्य दीपं प्रज्वाल्याचम्य गणेशादीन् गुर्वादीँश्च प्रणम्य पुष्पाञ्जलिं तेभ्यो दत्वा अर्घ्यस्थापनादिभूतोत्सादनान्तं कृत्वा कुशादिकमादाय प्रतिज्ञां कुर्यात् –

**ॐ अद्येहेत्यादि देशकालौ सङ्कीर्त्य सकलपापक्षयपूर्वकं दानकल्पोक्तफलकामो विष्णुप्रीतिकामो वा शय्यादानमहं करिष्ये ।**

ततः शय्यादानप्रतिग्रहार्थं ब्राह्मणस्य पूजनपूर्वकं वरणं कृत्वा लक्ष्मीनारायणप्रतिमाम् "ॐ एतन्ते" इति प्रतिष्ठाप्य पुरुषसूक्तादिना षोडशोपचारैः सम्पूज्य शय्यां च नाममन्त्रेण सम्पूज्य "ॐ नमः प्रमाण्यै देव्यै" इति चतुर्दिशं तां प्रदक्षिणीकुर्वन् प्रणम्य हस्ते कुशादिकमादाय –

**ॐ अद्येहेत्यादि देशकालौ सङ्कीर्त्य अहं ममात्मनः स्त्रीसहस्रावृतदशवर्षसहस्रस्वर्गलोकवास- सर्वसुखप्राप्तिपूर्वकम् इन्द्रलोकवास-अप्सरोगणसेव्यमानविमानारोहणपूर्वक–आभूतसंप्लवावधिस्वर्गवासकामः सकलपापक्षयपूर्वकं श्रीमत्परमेश्वरप्रीतिकामो वा इमां सालदारुमयीं हंसतूलीगण्डोपधान-प्रच्छादन-पट्टादिवस्त्रघृतकुम्भजलकलश-ताम्बूल-कुङ्कुमागरु-कर्पूरचन्दन-दीपिका-पादुकोपानच्छत्र-चामरासन-नानाविधभाजन-सप्तधान्य-सुवर्ण-रजत-भूषण-विविधभक्ष्य-भोज्यादर्श-कङ्कण-यथासम्भव-पट्ट-कौशेय-क्षौमौर्णकार्पास-वस्त्र-वाहनायुध-हैमलक्ष्मीनारायणप्रतिमायुतां शय्यां प्रजापतिदैवतां .....गोत्राय .....शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे, न मम ।**

इत्युक्त्वा साञ्जलिः प्रार्थयेत् –

> **ॐ यथा न कृष्णशयनं शून्यं सागरजातया ।**
> **शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥**
> **यस्मादशून्यं शयनं केशवस्य शिवस्य च ।**
> **शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि** ॥ इति ।

ततो गोदानं कृत्वा नीराजनं प्रदक्षिणादिकं च विधाय पूर्णपात्रं भूयस्यादिदक्षिणाः सति सम्भवेऽन्यान् षोडशकलशान् वस्त्राभूषणदक्षिणादींश्च ब्राह्मणेभ्यो दत्त्वा तदसम्भवे सवस्त्रं भूषणदक्षिणान् एकविंशतिसंख्यकान् पूर्वपूजितानेव कलशान् ब्राह्मणेभ्यो दत्त्वा मिष्टपक्वान्नादिभिस्तान् भोजयित्वा स्वयं च प्रसादीभूतं पवित्रमन्नं सम्भुज्य नियमं च विसर्जयेत्। अत्र केचित् कुमारिकाणां पूजां च कुर्वन्ति।

॥ इति स्कन्दपुराणानुसारिणी चन्द्रसहस्रपूजापद्धतिः समाप्ता ॥

## (ञ) चन्द्रसहस्रदर्शनविधिकथनम्

चन्द्रसहस्रदर्शनविधिश्च श्रीस्कन्दमहापुराणे द्वितीये वैष्णवखण्डे अयोध्यामाहात्म्ये व्यासागस्त्यसंवादे यथा -

श्रीव्यास उवाच –

भगवन् ब्रूहि तत्त्वेन तस्य चन्द्रहरेः शुभम्।

उत्पत्तिञ्च तथा चन्द्रव्रतस्योद्यापने विधिम्॥१॥

अगस्त्य उवाच –

अयोध्यानिलयं विष्णुं नत्वा शीतांशुरुत्सुकः।

आगच्छत्तीर्थमाहात्म्यं साक्षात्कर्तुं सुधानिधिः॥

अत्रागत्य च चन्द्रोऽथ तीर्थयात्रां चकार सः॥२॥

क्रमेण विधिपूर्वं च नानाश्चर्यसमन्वितः।

समाराध्य ततो विष्णुं तपसा दुश्चरेण वै॥३॥

तत्प्रसादं समासाद्य स्वाभिधानपुरस्सरम्।

हरिं संस्थापयामास तेन चन्द्रहरिः स्मृताः॥४॥

वासुदेवप्रसादेन तत्स्थानं जातमद्भुतम्।

तद्धि गुह्यतमं स्थानं वासुदेवस्य सुव्रत॥५॥

सर्वेषामेव भूतानां भर्तुर्मोक्षस्य सर्वदा।

अस्मिन्सिद्धाः सदा विप्र गोविन्दव्रतमास्थिताः॥६॥

नानालिङ्गधरा नित्यं विष्णुलोकाभिकाङ्क्षिणः।

अभ्यस्यन्ति परं योगं मुक्तात्मानो जितेन्द्रियाः॥७॥

यथा धर्ममवाप्नोति अन्यत्र न तथा क्वचित्।

दानं व्रतं तथा होमः सर्वमक्षयतां व्रजेत् ॥८॥
सर्वकामफलावाप्तिर्जायते प्राणिनां सदा ।
तस्मादत्र विधातव्यं प्राणिभिर्यत्नतः क्रमात् ॥
दानादिकं विप्रपूजा दम्पत्योश्च विशेषतः ॥९॥
सर्वयज्ञादिकफलं सर्वतीर्थावगाहनम् ।
सर्वदेवावलोकस्य यत्पुण्यं जायते नृणाम् ॥१०॥
तत्सर्वं जायते पुण्यं प्राणिनामस्य दर्शनात् ।
तस्मादेतन्महाक्षेत्रं पुराणादिषु गीयते ॥११॥
उद्यापनविधिश्चात्र नृभिर्द्विजपुरस्सरम् ।
अग्रे चन्द्रहरेश्चन्द्रसहस्रव्रतसंज्ञकः ॥१२॥
गते वर्षद्वये सार्धे पञ्चपक्षे दिनद्वये ।
दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः ॥१३॥
त्र्यधिके वा अशीत्यब्दे चतुर्मासयुते ततः ।
भवेच्चन्द्रसहस्रं तु तावज्जीवति यो नरः ॥
उद्यापनं प्रकर्तव्यं तेन यात्रा प्रयत्नतः ॥१४॥
यत्पुण्यं परमं प्रोक्तं सततं यज्ञयाजिनाम् ।
सत्यवादिषु यत्पुण्यं यत्पुण्यं हेमदायिनि ॥१५॥
तत्पुण्यं लभते विप्र सहस्राब्दस्य जीविभिः ।
सर्वसौख्यप्रदं तादृक् पुण्यव्रतमिहोच्यते ॥१६॥
चतुर्दश्यां शुचिः स्नात्वा दन्तधावनपूर्वकम् ।
चरितब्रह्मचर्यस्य जितवाक्कायमानसः ॥
पौर्णमास्यां तथा कृत्वा चन्द्रपूजां च कारयेत् ॥१७॥
पूर्वञ्च मातरः पूज्या गौर्यादिकक्रमेण च ।
ऋत्विजः पूजयेद्भक्त्या वृद्धिश्राद्धपुरस्सरम् ॥१८॥
प्रयतैः प्रतिमाः कार्याश्चन्द्रमण्डलसन्निभाः ॥
सहस्रसंख्या त्वथवा तदर्धं वा तदर्धकम् ॥

निजवित्तानुमानेन तदर्धेन तदर्धकम् ॥१९॥

ततः श्रद्धानुमानाद्वा कार्या वित्तानुमानतः।

अथवा षोडश शुभा विधातव्याः प्रयत्नतः ॥२०॥

चन्द्रपूजां ततः कुर्यादागमोक्तविधानतः।

माषैः षोडशभिः कार्याः प्रत्येकं प्रतिमाः शुभाः ॥२१॥

सोममन्त्रेण होमस्तु कार्यो वित्तानुमानतः।

प्रतिमास्थापनं कुर्यात्सोममन्त्रमुदीरयेत् ॥२२॥

सोमोत्पत्तिं सोमसूक्तं पाठयेच्च प्रयत्नतः।

चन्द्रपूजां ततः कुर्यादागमोक्तविधानतः ॥२३॥

चन्द्रन्यासं कलान्यासं कारयेन्मण्डले जलम्।

एकादशेन्द्रियन्यासं तथैव विधिपूर्वकम् ॥२४॥

चन्द्रविम्बनिभं कार्यं मण्डलं शुभ्रतण्डुलैः।

मध्ये च कलशः स्थाप्यो गव्येन पयसा प्लुतः ॥२५॥

चतुरस्रेषु सम्पूर्णान् कलशान् स्थापयेद्बहिः।

मण्डले चन्द्रपूजा च कर्तव्या नामभिः क्रमात् ॥२६॥

हिमांशवे नमश्चैव सोमचन्द्राय वै नमः।

चन्द्राय विधवे नित्यं नमः कुमुदबन्धवे ॥२७॥

सुधांशवे च सोमाय औषधीशाय वै नमः।

नमोऽब्जाय मृगाङ्काय कलानां निधये नमः ॥२८॥

नमो नक्षत्रनाथाय शर्वरीपतये नमः।

जैवातृकाय सततं द्विजराजाय वै नमः ॥२९॥

एवं षोडशभिश्चन्द्रः स्तोतव्यो नामभिः क्रमात् ॥३०॥

ततो वै प्रयतो दद्याद्विधिवन्मन्त्रपूर्वकम्।

शङ्खतोयं समादाय सपुष्पफलचन्दनम् ॥३१॥

नमस्ते मासमासान्ते जायमानः पुनः पुनः।

गृहाणार्घ्यं शशाङ्क त्वं रोहिण्या सहितो नमः ॥३२॥

एवं सम्पूज्य विधिवच्छशिनं प्रणतो भवेत्।
षोडशान्ये च कलशा दुग्धपूर्णाः सरत्नकाः॥
सवस्त्राच्छादनाः शान्त्यै दातव्यास्ते द्विजन्मने॥३३॥
अभिषेकं ततः कुर्यात्पायसेन जलेन तु॥३४॥
ऋत्विजां मनसस्तुष्टिः कार्या वित्तानुमानतः।
ब्राह्मणं भोजयेत्तत्र सकुटुम्बं विशेषतः॥३५॥
पूजनीयौ प्रयत्नेन वस्त्रैश्च द्विजदम्पती।
कर्तव्यञ्च ततो भूरि दक्षिणादानमुत्तमम्॥३६॥
प्रतिमाश्च प्रदातव्या द्विजेभ्यो धेनुपूर्विकाः।
सुवर्णं रजतं वस्त्रं तथान्नं च विशेषतः॥
दातव्यं चन्द्रसुप्रीत्यै हर्षादेवं द्विजन्मने॥३७॥
उपवासविधानेन दिनशेषं नयेत्सुधीः।
अनन्तरे च दिवसे कुर्याद् भगवदर्चनम्॥
बान्धवैः सह भुञ्जीत नियमञ्च विसर्जयेत्॥३८॥
एवञ्च कुरुते चन्द्रसहस्रं व्रतमुत्तमम्।
ब्रह्मघ्नोऽपि सुरापोऽपि स्तेयी च गुरुतल्पगः॥
व्रतेनानेन शुद्धात्मा चन्द्रलोकं व्रजेन्नरः॥३९॥
यादृशश्च भवेद्विप्र प्रियो नारायणस्य च।
एवं करोति नियतं कृतकृत्यो भवेन्नरः॥४०॥

॥ इति श्रीस्कान्दे चन्द्रहरेर्माहात्म्यवर्णने तृतीयः॥

## (ट) चतुरशीतिसिद्धपूजनम्

कर्मपात्रं विधाय मङ्गलाचरणपाठं कृत्वा दीपकलशगणेशादीनां पूजां समाप्य सहस्रसंख्यया जपेत्–

**ॐ पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीञ्जीवदानुम्। यामैरयँश्चन्द्रमसि स्वधाभिस्तामु धीरासोऽअनुदिश्य यजन्ते। प्रोक्षणीरासादय द्विषतो वधोसि॥**

ततो मध्ये वेद्यामनन्तं कूर्मं पीठादधो धर्ममधर्मं ज्ञानमज्ञानं वैराग्यमवैराग्यम् ऐश्वर्यमनैश्वर्यम् ईशानादिक्रमेण पूजयित्वा **ॐ महीद्यौः** इति मन्त्रेण भूमिशोधनं कृत्वा **ॐ धान्यमसि** इति मन्त्रेण धान्यं स्थापयेत्। तत्र कलशं संस्थाप्य तस्योपरि ताम्रपात्रे चतुरशीतिसङ्ख्यकासु सुवर्णप्रतिमासु **ॐ मनोजूतिः** इति मन्त्रेण चतुरशीतिसिद्धानां प्राणप्रतिष्ठां कृत्वा सिद्धकोष्ठाद्बहिरीशानादिक्रमेण चतुष्कोणेषु सनक-सनन्दन-सनातन-सनत्कुमारान् सम्पूज्य सिद्धभद्रमालिख्य मध्यकोष्ठेषु सर्वतोभद्रमण्डलस्थदेवतानां दध्यक्षतादिभिरीशानादिक्रमेण परितो दशरेखासु पूजयेत् –

१. ॐ ऋद्ध्यै नमः।
२. ॐ वृद्धयै नमः।
३. ॐ तुष्ट्यै नमः।
४. ॐ कान्त्यै नमः।
५. ॐ दयायै नमः।
६. ॐ पुष्ट्यै नमः।
७. ॐ क्रियायै नमः।
८. ॐ उन्नत्यै नमः।
९. ॐ क्षान्त्यै नमः।
१०. ॐ क्षमायै नमः।
११. ॐ शुभ्रायै नमः ।
१२. ॐ योगायै नमः।
१३. ॐ प्रभावत्यै नमः।
१४. ॐ वैष्णव्यै नमः।
१५. ॐ चान्द्रयै नमः।
१६. ॐ सौर्यै नमः।
१७. ॐ मोघायै नमः।
१८. ॐ कलायै नमः।
१९. ॐ सिद्धायै नमः।

ततोऽष्टाशीतिकोष्ठेषु ईशानादिक्रमेण नाममन्त्रैः सिद्धादीन् पूजयेत् –

१. ॐ सिद्धाय नमः।
२. ॐ सिद्धेश्वराय नमः।
३. ॐ सिद्धसुखाय नमः।
४. ॐ सिद्धदर्शनाय नमः।
५. ॐ महासिद्धाय नमः।
६. ॐ सिद्धदेवाय नमः।
७. ॐ सिद्धशास्त्राय नमः।
८. ॐ सिद्धाचार्याय नमः।
९. ॐ ज्ञानसिद्धाय नमः।
१०. ॐ सिद्धभुजे नमः।
११. ॐ सिद्धदक्षिणाय नमः।
१२. ॐ तीर्थसिद्धाय नमः।
१३. ॐ योगसिद्धाय नमः।
१४. ॐ भोगसिद्धाय नमः।
१५. ॐ गुणसिद्धाय नमः।
१६. ॐ चन्द्रसिद्धाय नमः।
१७. ॐ गणसिद्धाय नमः।
१८. ॐ अतिसिद्धाय नमः।
१९. ॐ सिद्धसेनाय नमः।
२०. ॐ सिद्धघटाय नमः।
२१. ॐ सिद्धसूर्याय नमः।
२२. ॐ अनुसिद्धकाय नमः।
२३. ॐ सिद्धकालाय नमः।
२४. ॐ सिद्धकामाय नमः।
२५. ॐ सिद्धब्रह्मस्वरूपाय नमः।
२६. ॐ सिद्धकर्त्रे नमः।
२७. ॐ सिद्धभर्त्रे नमः।
२८. ॐ सिद्धिदाय नमः।
२९. ॐ सिद्धसाधकाय नमः।
३०. ॐ सिद्धातिगाय नमः।
३१. ॐ कलासिद्धाय नमः।
३२. ॐ सर्वसिद्धाय नमः।

३३. ॐ प्रसिद्धकाय नमः।
३४. ॐ सिद्धमानाय नमः।
३५. ॐ सिद्धमानाय नमः।
३६. ॐ सिद्धकल्पाय नमः।
३७. ॐ सिद्धामृतकलातीताय नमः।
३८. ॐ सिद्धपाराय नमः।
३९. ॐ सिद्धज्ञाय नमः।
४०. ॐ सिद्धनायकाय नमः।
४१. ॐ सिद्धावलाय नमः।
४२. ॐ सत्सिद्धाय नमः।
४३. ॐ सिद्धमयाय नमः।
४४. ॐ सिद्धैकसाधनाय नमः।
४५. ॐ लोकसिद्धाय नमः।
४६. ॐ यज्ञसिद्धाय नमः।
४७. ॐ शुद्धसिद्धाय नमः।
४८. ॐ अवसिद्धाय नमः।
४९. ॐ वषट्सिद्धाय नमः।
५०. ॐ स्वस्तिसिद्धाय नमः।
५१. ॐ भूतसिद्धाय नमः।
५२. ॐ धीसिद्धाय नमः।
५३. ॐ भव्यसिद्धाय नमः।
५४. ॐ पूतसिद्धाय नमः।
५५. ॐ शम्भुसिद्धाय नमः।
५६. ॐ सुसिद्धकाय नमः।
५७. ॐ दक्षसिद्धाय नमः।
५८. ॐ रूपसिद्धाय नमः।
५९. ॐ हंससिद्धाय नमः।
६०. ॐ प्रसिद्धाय नमः।
६१. ॐ विष्णुसिद्धाय नमः।
६२. ॐ मुक्तसिद्धाय नमः।
६३. ॐ सिद्धकसिद्धाय नमः।
६४. ॐ सिद्धवाक् सिद्धधाम्ने नमः।
६५. ॐ सिद्धतनवे नमः।
६६. ॐ सिद्धानन्दस्वरूपाय नमः।
६७. ॐ पुण्यसिद्धाय नमः।
६८. ॐ भुवः सिद्धाय नमः।
६९. ॐ स्वर्गसिद्धाय नमः।
७०. ॐ सिद्धमन्त्राय नमः।
७१. ॐ शान्तिसिद्धाय नमः।
७२. ॐ पुरुसिद्धाय नमः ।
७३. ॐ हिरण्यसिद्धाय नमः।
७४. ॐ वाक्सिद्धाय नमः।
७५. ॐ तत्त्वसिद्धाय नमः।
७६. ॐ अतिसिद्धाय नमः।
७७. ॐ सिद्धरत्नाय नमः।
७८. ॐ सिद्धमालिने नमः।
७९. ॐ सिद्धवैकुण्ठधृषे नमः।
८०. ॐ सिद्धसेनाय नमः।
८१. ॐ सिद्धसाराय नमः।
८२. ॐ रुद्रसिद्धाय नमः।
८३. ॐ महामहामहासिद्धाय नमः।
८४. ॐ चतुरशीतिसंज्ञकाय नमः।

बहिश्चतुष्कोणेषु सनकादिचतुरः सिद्धान् पूजयेत् –

ॐ सनकाय नमः। ॐ सनन्दनाय नमः। ॐ सनातनाय नमः। ॐ सनत्कुमाराय नमः।

पुनश्चतुरशीतिकोष्ठेषु प्रतिकोष्ठं त्रिरावृत्त्याऽष्टाविंशतिः नक्षत्राणि पूजयेत् –

१. ॐ रोहिण्यै नमः ।
२. ॐ मृगशिरसे नमः ।
३. ॐ आर्द्रायै नमः ।
४. ॐ पुनर्वसवे नमः ।
५. ॐ तिष्याय नमः ।
६. ॐ अश्लेषायै नमः ।
७. ॐ मघायै नमः ।
८. ॐ पूर्वफाल्गुन्यै नमः ।
९. ॐ उत्तरफाल्गुन्यै नमः ।
१०. ॐ हस्ताय नमः ।
११. ॐ चित्रायै नमः ।
१२. ॐ स्वात्यै नमः ।
१३. ॐ विशाखायै नमः ।
१४. ॐ अनुराधायै नमः ।
१५. ॐ ज्येष्ठायै नमः ।
१६. ॐ मूलाय नमः ।
१७. ॐ पूर्वाषाढायै नमः ।
१८. ॐ उत्तराषाढायै नमः ।
१९. ॐ अभिजिते नमः ।
२०. ॐ श्रवणाय नमः ।
२१. ॐ धनिष्ठायै नमः ।
२२. ॐ शतभिषजे नमः ।
२३. ॐ पूर्वभाद्रपदायै नमः ।
२४. ॐ उत्तरभाद्रपदायै नमः ।
२५. ॐ रेवत्यै नमः ।
२६. ॐ अश्विन्यै नमः ।
२७. ॐ भरण्यै नमः ।
२८. ॐ कृत्तिकायै नमः ।

तत्र न्यासः

१. ॐ अर्यम्णे नमः।
२. ॐ मित्राय नमः।
३. ॐ वरुणाय नमः।
४. ॐ इन्द्राय नमः।
५. ॐ विवस्वते नमः।
६. ॐ त्वष्ट्रे नमः।
७. ॐ विधवे नमः।
८. ॐ अंशवे नमः।
९. ॐ भगाय नमः।
१०. ॐ पूष्णे नमः।
११. ॐ पर्जन्याय नमः।
१२. ॐ धात्रे नमः।
१३. ॐ माधवाय नमः।

इति क्रमतो न्यसेत्।

पुनः प्रतिकोष्ठं त्रिरावृत्त्याऽष्टाविंशतिः नक्षत्राणि पूजयेत् ।

## (ठ) सर्वतोभद्रमण्डलस्थदेवतानां लक्ष्मीनारायणस्य च पूजनम्

ततो मध्यमकोष्ठे सर्वतोभद्रं संस्थाप्य तन्मण्डलस्थाः षट्पञ्चाशद्देवता आवाह्य पूजयेत् । क्रमतः कलशपूर्णपात्रभूतकर्णिकायां धान्यतण्डुलयोरुपरि **ॐ आजिघ्रकलशम्** इति मन्त्रेण चित्रकलशं संस्थाप्य वरुणमावाह्य पूजयेत् । कलशोपरि षड्दलताम्रस्थाल्यां स्वर्णनिर्मितपलत्रयपरिमितायां चन्द्रप्रतिमायां प्राणप्रतिष्ठां कृत्वा चन्द्रपूजाविधिना पूजनञ्च कृत्वोपायनादिकं समर्प्य अर्घ्यं दत्त्वा नमस्कृत्य चन्द्रपूजां समाप्य मध्ये सुवर्णपलत्रयनिर्मितां लक्ष्मीनारायणप्रतिमां संस्थाप्य प्राणप्रतिष्ठां कृत्वा न्यासं कुर्यात् –

ॐ विष्णवे नमः, वामकरे। ॐ माधवाय नमः, दक्षकरे। ॐ गोविन्दाय नमः, वामपादे । ॐ कृष्णाय नमः, वामजानुनि । ॐ केशवाय नमः, दक्षजानुनि । ॐ श्रीपतये नमः, वामकट्याम् । ॐ पद्मनाभाय नमः, दक्षकट्याम् । ॐ हृषीकेशाय नमः, नाभौ। ॐ वासुदेवाय नमः, हृदये। ॐ जगत्पतये नमः, वामकुक्षौ ।

ॐ वैकुण्ठाय नमः, दक्षकुक्षौ। ॐ पुण्डरीकाक्षाय नमः, कण्ठे। ॐ मधुसूदनाय नमः, वक्त्रे। ॐ गोपतये नमः, वामचक्षुषि। ॐ दामोदराय नमः, दक्षचक्षुषि। ॐ जगन्नाथाय नमः, शिरसि।

ततः पुरुषसूक्तेन पाद्यादिभिः षोडशोपचारैर्लक्ष्मीनारायणं सम्पूज्य अङ्गपूजां कुर्यात् –

ॐ कृष्णाय नमः, पादौ पूजयामि। ॐ केशवाय नमः गुल्फौ पूजयामि। ॐ वामनाय नमः, कटिं पूजयामि। ॐ अच्युताय नमः, हृदयं पूजयामि। ॐ माधवाय नमः, कण्ठं पूजयामि। ॐ रामाय नमः, बाहू पूजयामि। ॐ नृसिंहाय नमः, मुखं पूजयामि। ॐ वराहाय नमः, नासिकां पूजयामि। ॐ विष्णवे नमः, नेत्रे पूजयामि। ॐ शार्ङ्गिणे नमः, ललाटं पूजयामि। ॐ मुरारये नमः, शिरः पूजयामि। ॐ लक्ष्मीनारायणाय नमः, सर्वाङ्गं पूजयामि।

इत्यङ्गपूजां विधाय धूपं दीपं नैवेद्यं च कृत्वाऽऽचमनमारार्तिक्यं ताम्बूलमुपायनं च दत्त्वा प्रदक्षिणां नमस्कारं कृत्वा गोदानं शय्यादानं च कृत्वा षट्पञ्चाशदधिकद्विशत-(२५६) मुष्टिपरिमिततण्डुलयुतं सदक्षिणं पूर्णपात्रं कुर्यात्। ततो विसर्जनाभिषेकतिलकादिकं कृत्वा तत्सर्वं आचार्याय प्रतिपादयेत्। यस्य स्मृत्येत्यादिकं पठित्वा कर्मेश्वरार्पणं कुर्यात्।

॥ इति चतुरशीतिपूजाविधिः ॥

# रुद्रयामलोक्तं सिद्धव्रतमाहात्म्यम्

॥ श्रीगणेशाय नमः॥

सूत उवाच –

एकदा चन्द्रमा स्वर्गे पितरं समपृच्छत।
सर्वे लोकाः शोकरोगदोषग्रस्ता विचेतसः॥
जायन्ते च विपद्यन्ते तेषामुद्धरणं कथम्।
प्रायश्चित्तं कथं तेषां परलोकोपकारकम्॥
कृतेन येन निरयान् न गच्छेरन् वदाधुना।

अत्रिरुवाच –

शृणु पुत्र प्रवक्ष्यामि नृणामत्युपकारकम्।
कृतेन येन पापात्मा न गच्छेद् यमयातनाम्॥
एतदेव पुरा स्कन्दो देवदारुवनान्तरे।
कैलासे मलयावासे शङ्करं लोकशङ्करम्॥
पप्रच्छ विनयाक्रान्तं पितरं योगसागरम्।
भगवन् मे कुरु दयां यदि दीनदयालुता॥
तदुपायं कथय मे लोकदुःखाकुलोस्म्यहम्।
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः॥
वर्णाश्रमाचारहीना गच्छन्ति यमयातनाम्।
तेषां पापार्दितानां तु इहैव निष्कृतिर्यथा॥
भवेन्न यान्ति निरयान् कृत्वापि पातकं महत्।

शङ्कर उवाच –

क्रौञ्चारे शृणु चात्यन्तं परं गोप्यं न कस्यचित्।
मयाख्यातं परं स्कन्द त्वत्प्रेमवशतोऽधुना॥
वक्ष्ये मनुष्यैर्वेदाशीवर्षेऽतीते व्रतं चरेत्।
महाव्रतमिति ख्यातं सिद्धव्रतमितीर्यते॥

सिद्धानां चतुरशीतिसंख्यानां पूजनं भवेत्।
मध्यवेद्यां सिद्धपीठस्थापनं पूजनं क्रमात्॥
अनन्तकूर्मपीठाधो धर्मज्ञानादिकं तथा।
वैराग्यैश्वर्यकं पूज्यं पीठकोणान्तरं बहिः॥
मध्ये तत्र सविन्नाले महीद्यौर्भूमिशोधनम्।
स्पृष्ट्वा भूमिं भूरसीति धान्येति धान्यस्थापनम्॥
तत्र ताम्रपात्रयुतं स्वर्णसिंहासनान्वितम्।
आजिघ्रेति हि मन्त्रेण कलशं स्थापयेत् पुनः॥
मनोजूतीति मन्त्रेण प्रतिष्ठाप्य यथाविधि।
सिद्धपीठकोष्ठबाह्य इशानक्रमतो न्यसेत्॥
चत्वारश्चैव सम्पूज्या शेषा मध्ये तु विन्यसेत्।
मध्यकोष्ठं तु हर्म्यर्थं सर्वतोभद्रमण्डलम्॥
तत्रैव निद्राकलशं पूर्वोक्तविधिना न्यसेत्।
नारायणस्य प्रतिमां सलक्ष्मीकं तथात्मनः॥
प्राणप्रतिष्ठाविधिना पाद्यार्घ्यावाहनादिभिः।
सिद्धतोभद्रमालिख्य प्रागुत्तरक्रमेण हि॥
कुर्याद् रेखा दश दश पूजयेन्नामतः क्रमात्।
ऋद्धिर्वृद्धिस्तुष्टिः कान्तिः दया पुष्टिः क्रियोन्नतिः॥
क्षान्तिः क्षमा दया योगा शुभ्रा विष्णुः प्रभावती।
सौरिश्चान्द्रिः कला मोघा सिद्धेति क्रमतः स्मृताः॥
अशीतिकोष्ठे सिद्धादीन् पूर्वोक्तविधिना यजेत्।
प्रणवादिश्चतुर्थ्यन्तं नमोऽन्तैर्मनुना युतान्॥
सिद्धः सिद्धेश्वरः सिद्धः सुखसिद्धश्च दर्शनः।
महासिद्धः सिद्धदेवः सिद्धः शास्त्रप्रवर्तकः॥
सिद्धाचार्यो ज्ञानसिद्धः सिद्धभुक् सिद्धदक्षिणः।
तीर्थसिद्धो योगसिद्धो भोगसिद्धश्चतुर्दश॥

गुणसिद्धश्चन्द्रसिद्धौ गणसिद्धश्च सिद्धकः।

सिद्धसेनः सिद्धघटः सिद्धसूर्योऽनुसिद्धकः॥

सिद्धकालः सिद्धकामः सिद्धब्रह्मस्वरूपकः।

सिद्धकर्ता सिद्धभर्ता सिद्धिदः सिद्धसाधकः॥

सिद्धातिगः कलासिद्धः सर्वसिद्धः प्रसिद्धकः॥

सिद्धमानः सिद्धकल्पः सिद्धामृतकलातिगः।

षट्त्रिंशत्सिद्धपारश्च सिद्धज्ञः सिद्धनायकः॥

सिद्धाबलः स्वतः सिद्धमयः सिद्धैकसाधनः।

लोकसिद्धो यज्ञसिद्धः शुद्धसिद्धोऽतिसिद्धकः॥

वषट्सिद्धः स्वस्तिसिद्धो भूतसिद्धो धीसिद्धकः।

भव्यसिद्धः पूतसिद्धः शम्भुसिद्धः सुसिद्धकः॥

दक्षसिद्धो रूपसिद्धो हंससिद्धः प्रसिद्धकः।

विष्णुसिद्धो मुक्तसिद्धः सिद्धकः सिद्धवाक् तथा॥

सिद्धधामः सिद्धतनुः सिद्धानन्दस्वरूपी च।

पुण्यसिद्धो भुवःसिद्धः स्वर्गसिद्धिप्रदायकः॥

सिद्धमन्त्रः शान्तिसिद्धः पुरुसिद्धनियामकः।

हिरण्यसिद्धो वाक्सिद्धस्तत्त्वसिद्धोऽतिसिद्धकः॥

सिद्धरत्नः सिद्धमाली सिद्धो वैकुण्ठरूपधृक्।

सिद्धसेनः सिद्धसारो रुद्रसिद्धस्तथैव च।

महामहामहासिद्धश्चतुरशीतिसंज्ञकः॥

सम्पूज्य प्रतिकोष्ठेषु सप्तावृत्त्या रविं न्यसेत्।

अर्यमा मित्रा वरुणश्चेन्द्रश्चैव चतुर्थकः॥

वैवस्वतस्तथा त्वष्टा विधुरः शुभगस्तथा।

पूषा पर्जन्यधाता च माधवः क्रमतो न्यसेत्॥

प्रतिकोष्ठं पूजयित्वा पूजां चन्द्रस्य तत्क्रमात्।

अष्टाविंशतिनक्षत्रैः प्रतिकोष्ठं त्रिवारकम्॥

कृत्वा मध्यमकोष्ठेषु सर्वतोभद्रमण्डलम्।
षट्पञ्चाशत् तत्र देवानावाह्य क्रमतो यजेत्॥
कर्णिकायां च कलशं निद्रासंज्ञं न्यसेत् पुनः।
आजिघ्रकलशेत्युक्त्वा वरुणेति पठेन्मनुम्॥
मध्ये नारायणं तत्र सश्रीकं पूजयेत्ततः।
पूर्णादर्वीति मन्त्रेण तन्मुखे पूर्णपात्रकम्॥
ताम्रस्थालीं साष्टदलां कृत्वा दिक्पालपूजनम्।
ग्रहपूजां ततः कृत्वा साधिप्रत्यधिदैवतम्॥
तद्विष्णोरिति मन्त्रेण तस्याग्रे स्वात्मबिम्बकम्।
पलत्रयमितं स्थाप्यं न्यासं कुर्यात्प्रयत्नतः॥
करे वामे दक्षिणे च वामदक्षिणपादयोः।
वामजानौ दक्षिणे च कट्यां च वामदक्षिणे॥
नाभौ तथैव हृदये कुक्षौ वामे च दक्षिणे।
कण्ठे वक्त्रे नेत्रमूर्ध्नि षोडशाङ्गेषु नामभिः॥
विष्णुर्माधवगोविन्दौः कृष्णः केशवश्रीपती।
पद्मनाभो हृषीकेशो वासुदेवो जगत्पतिः॥
वैकुण्ठः पुण्डरीकाक्षो मधुसूदनगोपतीः।
दामोदरो जगन्नाथः क्रमादङ्गानि संस्पृशेत्॥
अनुलोमविलोमेन ह्यङ्गपूजां पुनश्चरेत्।
पादौ गुल्फौ जानुकटिहृत्कण्ठदोर्मुखेषु च॥
नासिकानेत्रभालेषु शिरसि विष्णुनामतः।
कृष्णकेशवकंसारिवामनाच्युतमाधवाः॥
रामनृसिंहवाराहास्तत्थानेषु स्पृशेत् तथा।
विष्णुः शार्ङ्गी मुरारिश्च क्रमादेव विधिः स्मृतः॥
चतुरशीतिविप्राणां पूजनं कारयेत्पुनः।
वस्त्रालङ्कारगन्धाद्यैः रौप्यं गोदानकं चरेत्॥

जन्मान्तरीयपापस्य तथैव चैहिकस्य च।
प्रायश्चित्तमिदं प्रोक्तं तथैवागन्तुकस्य च॥
कृत्वा व्रतमिदं जीवाः कृतकृत्यो भवेद् भुवि।
षाण्मातुर ! शृणु पुनः पापेषु न रमेत् क्वचित्॥
अधर्मं न वदेत् किञ्चिन्नाधर्मं चिन्तयेज्जनः।
यद्यधर्मं प्रकुरुते सर्वं कुञ्जरशौचवत्॥

सूत उवाच –

श्रुत्वा शङ्करवाक्यं तद् गुह्यं प्रपच्छ सादरम्।
शृणु शौनक ! वक्ष्यामि सेतिहासं कथानकम्॥

स्कन्द उवाच –

शृणु स्कन्द प्रवक्ष्यामि गोप्याद् गोप्यतरं परम्।
यस्य श्रवणमात्रेण प्रायश्चितः प्रजायते॥
नर्मदातीरनगरे माहिष्मत्यां पुरा किल।
ब्राह्मणो ब्रह्मवर्चस्वी ज्ञानवान् धार्मिकः कृतिः॥
कदाचित् सङ्गदोषेण रागान्धो धर्मवर्जितः।
अकृत्याचरणे शक्तो मांसभुक्मद्यपः सदा॥
सर्वगामी सर्वभक्षी कौलधर्मपरायणः।
एवं तस्य गताहानि चतुरशीतिवत्सरम्॥
एकदा नर्मदातीरे ब्राह्मणा वेदपारगाः।
सिद्धव्रतं समाचक्रुः शिवशर्मा समागतः॥
तस्य प्राचीनमित्रं च श्रीशर्माणं द्विजोत्तमम्।
दृष्ट्वा मित्रं प्रत्युवाच कस्मादागतवान् भवान्॥
वाक्यं श्रीशर्मणो श्रुत्वा भूत्वा किञ्चिदवाङ्मुखः।
पुण्यात्मनो दर्शनाद्वै स्पर्शनान्मननादपि॥
शुद्धान्तः करणो जातो रुरोद मित्रसन्निधौ।
उवाच किमु वक्तव्यं ह्यकर्तव्यं कृतं मया॥
कथं मे निष्कृतिर्भूयान्मज्जेऽहं नरकेऽशुभे।

उद्धारं कुरु मे बन्धो प्रायश्चित्तं कथं भवेत्॥
उवाच वद मे दीने मय्यस्मिन् त्वं दयां कुरु।
वचनं शिवदत्तस्य श्रुत्वाः खेदसमन्वितः॥
श्रीशर्मा समुवाचाथ निर्हेतुः कृपयान्वितः।
[४२]संवत्सरं कति जातं ब्रह्मन् वद तवाधुना॥
चतुरशीतिवर्षोऽहमब्रवीत् तं मुदा तदा।
श्रीशर्मा प्रत्युवाचेदं कुरु सिद्धव्रतं भवान्॥
इत्युक्ते वरयित्वा तं चकार व्रतमुत्तमम्।
तद्व्रतस्य प्रभावेण मुक्तोऽभूत्स च पातकात्॥
दिव्यवर्षं तपस्तप्त्वा परमां गतिमाययौ।
यः शृणोति परं भक्त्या पठेद्वा सुसमाहितः॥
स्वर्गमोक्षप्रदं धन्यं स गच्छेत्परमं पदम्॥

॥ इति रुद्रयामले सिद्धभागे व्रतखण्डे सिद्धव्रतं नाम पञ्चाशीतितमोऽध्यायः॥

## चौरासी पूजाका लागि आवश्यक सामग्री

पूर्वदिनमा पूर्वाङ्ग, मातृका पूजा, आभ्युदयिक श्राद्ध, मण्डप पूजा। दोस्रो दिनमा चौरासी सिद्धको पूजाका निमित्त १६ हातको मण्डप, २१ लिङ्गा, २१ ध्वजा, ८४ कलश, ८४ थाली, ८४ सुवर्णप्रतिमा, ८४ वस्त्र, ८४ भेटी, ८४ जनै, ८४ सुपारी, १ ठूलो कलश, १ तामाको थाली, एउटा चाँदीको प्रतिमा, लक्ष्मीनारायणको सुवर्ण प्रतिमा १, पूजा सामान- ३ भाग, चाँदीको चन्द्रमाको प्रतिमा-१, गणेशादि देवताको पूजापाठ, वेदपाठ, ८४ ब्राह्मण पूजा, सिद्धतोभद्र १, सर्वतोभद्र १, शय्यादान, गाईदान आदि।

पूजा सामानमा- तिल, जौ, कुश, सस्यूँ, चन्दन, अक्षता, फूल, धूप, दीप, नैवेद्य, दुबो, पान, सुपारी, जनै, फलफूल, पक्वान्न नैवेद्य आदि।

## चन्द्रदानका लागि आवश्यक सामग्री

चामल, श्रीखण्ड, कपूर, चाँदी, शङ्ख, सेतो वस्त्र, दही, मोती, चौरासी गोदान आदि।

४२. 'कति संवत्सरं जातम्' इति साधु पाठः।

## शब्दार्थाः

| | | |
|---|---|---|
| कृन्तनम् | = | काट्नु |
| अननुसन्धानवशात् | = | खोज खबर नगर्नाले |
| रौप्यम् | = | चाँदी |
| षोडशमाषपरिमितेन | = | सोह्र मासा प्रमाणले भएका |
| विस्तृता | = | फैलाइएका |
| सति सम्भवे | = | पुगिसरि आएमा वा सम्भव भएमा |
| आदेहि | = | लिनुहोस् |
| वारि | = | जल |
| अवशिष्टम् | = | बाँकी रहेको |
| सङ्कीर्त्य | = | भनेर |
| आभूतसम्प्लवावधिः | = | प्रलय नभएसम्म |
| उपकरणम् | = | सामाग्री (सामान) |
| हैमम् | = | सुनको |
| प्रच्छादनम् | = | ढाक्नु, छोप्नु |
| तोयम् | = | पानी, जल |
| शर्वरी | = | रात्रि |
| स्तेयम् | = | चोर्नु |
| क्षौमम् | = | सूक्ष्म, रेशमीवस्त्र |
| पादुका | = | खराउ चपल |
| उपानत् | = | जुत्ता |
| आदर्शनम् | = | ऐना |
| कङ्कणम् | = | चुरा, बाला |
| ऊर्णा | = | ऊन |
| कार्पासः | = | कपास |
| आवृत्त्या | = | दोहोऱ्याएर |
| षट्पञ्चाशत् | = | छपन्न |
| निरयः | = | नरक |
| आर्दितानाम् | = | पीडित भएका |
| निष्कृतिः | = | प्रायश्चित्त |
| न्यसेत् | = | राखोस् |
| आगमः | = | धर्मशास्त्र |
| निमगः | = | वेद |
| ब्रह्मघ्नः | = | ब्रह्महत्या गर्ने |
| सुरापः | = | मदिरा (रक्सी) पिउने |
| गुरुतल्पगः | = | गुरुआमाको शय्यामा सुत्ने |

# अभ्यासः

**१. शब्दार्थान् लिखत**

प्राणप्रतिष्ठा । अधः । वर्षभोग्यम् । उपधानम् । अपरः । भाण्डानि । कार्पासः ।

**२. अधस्तनशब्दान् प्रयुज्य वाक्यरचना विधेया**

रौप्यम् । हेम । निरयः । स्तेयम् । उपानत् ।

**३. कोष्ठस्थं सर्वोपयुक्तं पदमवचित्य वाक्यपूर्णो विधेयः**

(क) चतुरशीतिपूजायां ........पूजनं भवति । (कलानाम्, पर्वतानाम्, ऋषीणाम्)

(ख) चतुरशीतिपूजायां ........पूज्यते । (लोकहरिः, चन्द्रहरिः, चन्द्रारिः, मुरारिः)

(ग) चन्द्रस्य दानम् ............... । (मधु, दधि, घृतम्, सुवर्णम्)

(घ) सर्वतोभद्रे ...... प्रकोष्ठाः भवन्ति । (३३०, ३३४, ३२४, ३५४.

**४. प्रश्नान् समुत्तरयत**

(क) चतुरशीतिपूजा किमर्थं कदा क्रियते ? निरूपयत ।

(ख) चतुरशीतिपूजायां विशेषोपकल्पनीयानि द्रव्याणि (वस्तूनि) कानि ?

(ग) पुराक्रूरस्य विसृपो ...... इति मन्त्रं पूरयत ।

(घ) चन्द्रस्य षोडश नामानि कानि ? तानि परिगणनीयानि ।

(ङ) चन्द्रदर्शनविधेर्माहात्म्यं पूर्वं कस्मै केनाऽऽख्यातम् ? कुतः समानीतं माहात्म्यमिदम् ?

(च) सिद्धपूजायामङ्गन्यासप्रकारः प्रदर्शनीयः ।

## प्रयोगाभ्यासः

१. चन्द्रस्य नामानि शुद्धतया श्रावयत ।

२. पाठ्यांशगतान् मन्त्रान् स्तोत्राँश्च कक्षायां श्रावयत ।

३. सर्वे सखायो मिलित्वा विद्यालयस्य प्राङ्गणे चन्द्रपूजनस्याऽऽयोजनं विधत्त ।

४. शिक्षकमग्रे कृत्वा कलासहितस्य चन्द्रस्याऽऽकृतिं रचयत ।

५. युष्माकं गृहे समुदाये वाऽऽयोजिते चतुरशीतिपूजनकर्मणि भागं गृहीत्वाऽभ्यासो विधेयः ।

# एकादशाहे कर्तव्यता

आशौचान्तद्वितीयेऽह्नि शय्यां दद्याद्विचक्षणः।

काञ्चनं पुरुषं तद्वत् फलवस्त्रसमन्वितम्॥

पूजयेद् द्विजदम्पत्यौ नानाभरणभूषणैः।

वृषोत्सर्गं च कुर्वीत देया च कपिला शुभा॥

द्वादशाहे यदा कुर्यात् पितुः पुत्रः सपिण्डनम्।

एकादशेऽह्नि कुर्वीत प्रेतश्राद्धानि षोडश॥

– मत्स्यपुराणम्

यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोडश।

पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि॥

– याज्ञवल्क्यः

आद्ये द्वे आद्यमासिकोनमासिके॥ अर्द्धं त्रैपाक्षिकं जातूकर्ण्योऽपि –

द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा।

त्रैपाक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश॥

अत्र द्वादशप्रतिमास्यानीत्यभिधानाद् आद्यषाण्मासिकाब्दिकशब्दा ऊनमासिकोन-षाण्मासिकोनाब्दिकपराः॥ एतेषां नियमः कालः शातातपेनोक्तः-

मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम्।

प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि॥

अत्र प्रतिमासं प्रतिसंवत्सरं चेत्यभिधानादाद्यमेकादशेऽहनि इत्युक्तत्वादाद्यमासिकमाद्याब्दिकं चैकादशेऽह्नि कुर्यात्॥ अनेनैवाभिप्रायेण गोभिलोप्याद्यस्य द्विरावृत्तिमाह-

ब्राह्मणं भोजयेदाद्ये होतव्यमनलेऽथवा।

पुनश्च भोजयेद् विप्रं द्विरावृत्तिर्भवेदिति॥

क्षत्रियादिरपि आद्यं श्राद्धमेकादशेऽह्नि कुर्यात्॥

तदाह वृद्धवशिष्ठः –

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।

चतुर्णामपि वर्णानां सूतकं तु पृथक् पृथक्॥

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि।

कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥

– लौगाक्षिः

सपिण्डीकरणादर्वाक् कुर्याच्छ्राद्धानि षोडश।

एकोद्दिष्टविधानेन कुर्यात् सर्वाणि तानि तु ।

– पैठिनसिः

सपिण्डीकरणादूर्ध्वं यदा कुर्यात् तदा पुनः।

प्रत्यब्दं यो यथा कुर्यात् तथा कुर्यात् स तान्यपि॥

सपिण्डीकरणादर्वाक् अपकृष्य कृतान्यपि।

पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥

– शाट्यायनिः

वृद्धिश्राद्धानन्तरं तन्निषेधादित्यर्थः॥

तथा-

नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश।

एकेनैव तु कार्याणि संविभक्तधनेष्वपि॥

सपिण्डीकरणं यावत्प्रेतश्राद्धानि षोडश।

पृथङ् नैव सुताः कुर्युः पृथक् द्रव्या अपि क्वचित् ॥

– शातातपः

तत्र च यथांशं सर्वैर्द्रव्यं देयम्॥ सद्यः शौचे तु -

सद्यः शौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि।

स एव दिवसस्तस्य श्राद्धशय्यासनादिषु ॥

– शङ्खः

पिण्डोदकादिष्विति वा पाठः॥ एकाहाशौचे तु दशाहकृत्यं तस्मिन्नेवाहनि द्वितीये चैकादशाह इति ढुण्ढपद्धतौ॥ त्र्यहाशौचे तु चतुर्थेऽहनि एकादशाहः नव श्राद्धमासिकयोर्विघ्ने कण्वः-

नव श्राद्धं मासिकं च यद्यदन्तरितं भवेत्।
तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते॥
उत्तरसातन्त्र्यम् उत्तरेण समानकालत्वं तस्मादित्यर्थः॥
नवश्राद्धमाश्वलायनशाखिनाम्। तथा च –
नव श्राद्धानि पञ्चाहुराश्वलायनशाखिनः।
आपस्तम्बाः षडित्याहुर्विभाषां तैत्तिरीयकाः॥
एकादशाहव्यतिरेकेण पञ्च।
यतिषु शिवस्वामी -
एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम्।
न कुर्यात् पार्वणादन्यद्ब्रह्मीभूताय भिक्षवे॥
एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा।
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥

– शातातपः।

आशिषो द्विगुणा दर्भा जयाशीः स्वस्तिवाचनम्।
पितृशब्दः स्वसम्बन्धः शर्म्मशब्दस्तथैव च॥
पात्रालम्भोऽवगाहश्च ह्युल्मुकोल्लेखनादिकम्।
तृप्तिप्रश्नश्च विकिरः शेषप्रश्नस्तथैव च॥
प्रदक्षिणा विसर्गश्च सीमान्तगमनं तथा।
अष्टादशपदार्थाश्च प्रेतश्राद्धे विवर्जयेत् ॥

– उशना।

प्रेतश्राद्धे न विकिर इति। तथा च –
प्रेतश्राद्धे नु यत्पात्रमर्घ्यार्थं परिकल्पितम् ।
तस्यैवोत्तानता प्रोक्ता शेषेषु न्युब्जता मता ॥

– स्मृतिरत्नावल्याम्।

प्रेतश्राद्धेषु सर्वेषु न स्वधा नाभिरम्यता।
स्वस्त्यस्तु विसृजेदेवं सकृत्प्रणववर्जितम्॥
एकोद्दिष्टस्य पिण्डे तु अनुशब्दो न युज्यते।
पितृशब्दं न कुर्वीत पितृहा चोपजायते ॥

– आश्वलायनः।

अनुशब्दः सामगानाम्। पितृशब्देन –

अत्र पितरो मादयध्वं यथाभागमावृषायद्ध्वम्। अमीमदन्तपितरो यथाभागमावृषायिषत॥

नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तसतो वः पितरो देष्मैतद्वः पितरो वासः॥

मन्त्रौ ज्ञेयौ ऊर्ज्जम् इति मन्त्रपाठनिषेध इति सुगतिकृत्॥

अस्तङ्गते तथादित्ये गत्वा विप्रनिवेशनम्।

दत्त्वा तु पाद्यं विधिवन्नमस्कृत्य द्विजोत्तमम्॥

पादौ प्रक्षाल्य तैलेन प्रेतस्य हितकाम्यया।

प्रभातायां तु शर्वर्यामुदिते च दिवाकरे॥

कारयित्वा श्मश्रुकर्म नखच्छेदं ततः परम्।

स्नपनाभ्यञ्जने दद्याद् विप्राय विधिपूर्वकम्॥

इत्युक्तत्वात् पूर्वदिने श्राद्धार्थं द्विजनिमन्त्रणं कर्तव्यम्, तत्र कूर्मणयोवराहपुराणे –

आशौचान्तदिने हविष्यमेकवारं भुक्त्वा रात्रौ विप्रनिवेशनं गत्वा त्रीनेकं वा ब्राह्मणमुदङ्मुखमुपनिवेश्य कृतापसव्यो दक्षिणाभिमुखः पातितवामजानुः -

गतोऽसि दिव्यलोके त्वं कृतान्तविहितात्पथः।

मनसा वायुभूतेन विप्राहं त्वा नियोजये॥

पूजयिष्यामि भावेनेति प्रेतोद्देशेन पठित्वा, पुष्पचन्दनपूगीफलानि विप्रहस्ते दत्त्वा ब्राह्मणस्य दक्षिणजानु स्पृष्ट्वा –

अद्यास्यां रात्रौ (अमुक)गोत्रस्य (अमुक)प्रेतस्य श्व आद्यमासिकश्राद्धकरणाय भवन्तं ब्राह्मणमामन्त्रये । आमन्त्रितोऽस्मीति ब्राह्मणेनोक्ते-

अक्रोधनैः शौचपरैः सततं ब्रह्मवादिभिः।

भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा॥

सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः।

भवितव्यं भवद्भिर्नः स्वस्तये श्राद्धकर्मणि॥

ब्राह्मणेन – यद्यविघ्नेयं रजनी याति तदा सर्वमेतत्करिष्यामीत्युक्ते विप्रं नमस्कृत्य प्रेतहितमुद्दिश्य तिलतैलेन आजानु विप्रपादौ अभ्यङ्गच अत्र स्त्रिया अपि गतोऽसीति अविकृतमेव पठनीयम्। आत्मत्त्वेनोद्देश्यत्वात्।

## एकादशाहे क्रियाक्रमः

अथ प्रातर्नदीं जलाशयान्तरं वा गत्वा पात्रब्राह्मणस्य श्मश्रुकर्म नखच्छेदनं च कारयित्वा ताम्रपात्रेण स्नानोपकरणं तैलोद्वर्तनं च दत्त्वा स्वयं च स्नात्वा श्वेतवस्त्रं परिधाय जलाशयसमीपे गृहे वा श्राद्धभूमिं प्रकल्प्य तां संशोध्य गौरमृत्तिकयाऽऽच्छाद्य गोमयेनोपलिप्य पञ्चगव्येनाभ्युक्ष्य तिलान् सर्षपाँश्च विकिरेत्। आस्तृतपाकस्थाने तिलान् विकीर्य तत्र सपिण्डनद्वारा नूतनमृण्मयभाण्डे ताम्रपात्रादिभिर्वा पाकं कारयितुमारभ्योदङ्मुखाय ब्राह्मणाय शय्यां दद्यात्।

### (क) शय्यादानम्

कर्त्ता आचान्तः पूर्वाभिमुखः सव्येन **सोपकरणशय्यायै नमः, ब्राह्मणाय नमः** इति शय्यां ब्राह्मणं च त्रिः सम्पूज्य वारिणा शय्यामभिषिच्य कुशतिलजलान्यादाय -

**अद्याशौचान्तद्वितीयेऽह्नि (अमुक)गोत्रस्य (अमुक)प्रेतस्य स्वर्गप्राप्तिकाम इमां सोपकरणशय्यां विष्णुदैवताम् (अमुक)गोत्राय (अमुक)शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे** ।

प्रार्थना –

**यस्मादशून्यं शयनं केशवस्य शिवस्य च ।**

**शय्या अस्याप्यशून्यास्तु तस्माज्जन्मनि जन्मनि** ॥

इत्युक्त्वा दद्यात्। स्वस्तीति प्रतिवचनम्।

दानप्रतिष्ठा –

कुशतिलजलसहितं दक्षिणाद्रव्यमादाय –

**अद्य कृतैतत् सोपकरणशय्यादानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतम्** (अमुक) **गोत्राय** (अमुक) **शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे** । इति दद्यात्।

प्रतिग्रहीता स्वस्तीत्युक्त्वा शय्यां स्पृशेत्।

### (ख) काञ्चनपुरुषदानम्

आचम्य **फलवस्त्रसमन्वितकाञ्चनपुरुषाय नमः, ब्राह्मणाय नमः** इति देयं ब्राह्मणं च त्रिः सम्पूज्य कुशादीन्यादाय –

**अद्याशौचान्तद्वितीयेऽह्नि (अमुक)गोत्रस्य (अमुक) प्रेतस्य स्वर्गप्राप्तिकाम इमं फलवस्त्रसमन्वितं काञ्चनपुरुषं विष्णुदैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे** । स्वस्तीति प्रतिवचनम्।

दानप्रतिष्ठा –

कुशतिलजलसहितं दक्षिणाद्रव्यमादाय –

**अद्य कृतैतत् फलवस्त्रसमन्वितकाञ्चनपुरुषदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे** । इति दद्यात् ।

प्रतिग्रहीता स्वस्तीत्युक्त्वा काञ्चनपुरुषं स्पृशेत् ॥

## (ग) द्विजदम्पतीपूजनम्

आचम्य कुशतिलजलान्यादाय प्रतिज्ञां कुर्यात् -

**अद्याशौचान्तद्वितीयेऽह्नि (अमुक) गोत्रस्य (अमुक) प्रेतस्य स्वर्गप्राप्तिकामो द्विजदम्पतीपूजनमहं करिष्ये** । इति सङ्कल्प्य द्विजदम्पती पूजयेत् ।

तत्र क्रमः –

**एषोऽर्घो द्विजदम्पतीभ्यां नमः, इदं पुष्पं द्विजदम्पतीभ्यां नमः, एते अक्षताः द्विजदम्पतीभ्यां नमः, धूपदीपनैवेद्यपूगीफलसिन्दूरभूषणवासांसि द्विजदम्पतीभ्यां नमः** इति दद्यात् ॥ ततो नमस्कुर्यात् । प्रतिमां पूजयित्वा ब्राह्मणाय दद्यात् । एतच्च द्विजदम्पतीपूजनं प्रधानत्वाद् वृषोत्सर्गाकरणेऽपि कर्तव्यं शय्यादानवदिति । शय्यादानादिकमन्वारोहणेऽपि कर्त्तव्यम् । तत्रामुकगोत्राय अमुकप्रेताय इति वाक्यं कुर्यात् ।

## (घ) वृषोत्सर्गविधिः

**पतिपुत्रवती नारी भर्त्तुरग्रे मृता यदि ।**

**वृषोत्सर्गं न कुर्वीत गां च दद्यात् पयस्विनीम्** ॥

इति वचनात् सधवायाः प्रेतत्वे वृषोत्सर्गो न विधेयः । वृषोत्सर्गं च कुर्वीतेति वचनादेकादशाहे मुख्यकाले मातृस्थापनपूजाभ्युदयिकश्राद्धरहितवृषोत्सर्गः कर्तव्यः ।

१. प्रतिज्ञासङ्कल्पः

आचान्तः पूर्वाभिमुख उपविश्य सव्येन कुशतिलजलान्यादाय प्रतिज्ञां कुर्यात् –

**अद्याशौचान्तद्वितीयेऽह्नि (अमुक) गोत्रस्य (अमुक) प्रेतस्य प्रेतत्वविमुक्तिस्वर्गलोकगमनार्थं वत्सतरीसहितवृषोत्सर्गमहं करिष्ये** ।

इति सङ्कल्पं कुर्यात् । तत उत्तराभिमुखं ब्राह्मणमुपवेशयेत् ।

## २. ब्राह्मणवरणम्

**अद्य** (**अमुक**) **गोत्रस्य** (**अमुक**) **प्रेतस्य कर्त्तव्यवृषोत्सर्गाङ्गभूतहोमकर्मणि कृताकृतावेक्षणरूपं ब्रह्मकर्म कर्तुम्** (**अमुक**) **गोत्रम्** (**अमुक**) **शर्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूल-पूगीफलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे** । इति ब्राह्मणं वृणुयात्। **वृतोऽस्मि** इति प्रतिवचनम्। **यथा विहितं कर्म कुरु, करवाणि** इति प्रतिवचनम्।

ततः -

**अद्य** (**अमुक**) **गोत्रस्य** (**अमुक**) **प्रेतस्य कर्त्तव्यवृषोत्सर्गाङ्गभूतहोमकर्म कर्तुम्** (**अमुक**) **गोत्रम्** (**अमुक**) **शर्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूल-पूगीफलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे** । इति ब्राह्मणं वृणुयात्। **वृतोऽस्मि** इति प्रतिवचनम्। **यथा विहितं कर्म कुरु, करवाणि** इति प्रतिवचनम्।

## ३. हवनवेदिनिर्माणम् संस्कारश्च

ततो होता आचान्तः प्राङ्मुखोपविष्टो गोमयेनोपलिप्ते प्रागुदक्प्रवणे देशे कुशैर्हस्तमात्रां चतुरस्रभूमिं परिसमूह्य कुशानैशान्यां क्षिप्त्वा गोमयोदकेनोपलिप्य मध्ये प्रादेशमात्र-मुत्तरोत्तरक्रमेण स्रुवमूलेन त्रिरुल्लिख्योल्लेखनक्रमेण रेखारजो दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां सङ्गताभ्यामुद्धृत्य तदैशान्यां क्षिप्त्वा तं देशं जलेनाभ्युक्ष्य तत्र दक्षिणहस्तस्थ-कांस्यपात्रेण अग्निं स्थापयेत्। अग्नेर्दक्षिणतः परिस्तरणभूमिमतिक्रम्य शुद्धमासनमुपकल्प्य तत्र प्रागग्रकुशैः स्तरणं विधाय ब्रह्माणमग्नेर्वायव्याः प्रदक्षिणमानीय कल्पितासने बर्हिर्हस्तमुपवेशयेत् ।

ततोऽग्नेरुत्तरतः स्तरणभूमिमतिक्रमय कुशत्रयमास्तीर्य्य तत्र प्रणीतापात्रमध्ये पिष्टादिना व्यवधानं कृत्वा मूलदेशे पय इतरत्र जलं प्रक्षिप्य आसने निधाय उपमूलसकृल्लूनबर्हिषां मुष्टिचतुर्भागे आग्नेयादीशानान्तं प्राच्यां ब्रह्मणोऽग्निपर्यन्तं दक्षिणस्यां नैर्ऋत्याद्वायव्यान्तं पश्चिमायामग्नितः प्रणीतापर्यन्तमुत्तरस्यां स्तरणं कुर्यात्।

ततोऽग्नेरुत्तरतः पश्चिमे वा प्राकसंस्थमुदक्संस्थं वा उपयोक्ष्यमाणानामासादनम्। तद्यथा- पवित्रछेदनार्थं कुशपत्रत्रयं पवित्रार्थमनन्तर्गर्भिणं साग्रं कुशपत्रद्वयं प्रोक्षण्यर्थं मृत्पात्रम् आज्यार्थं ताम्रस्थालीं पायसचर्वर्थं मृत्स्थालीं स्रुवसम्मार्जनार्थं कुशपत्रत्रयं उपग्रहार्थं वेणीरूपकुशत्रयं प्रादेशमितपलाशसमित्त्रयं स्रुवः आज्यं तण्डुलाः दुग्धमित्यादीन्यासाद्य तदुत्तरतः सिद्धमेव पिष्टं ब्रह्मदक्षिणार्थं पूर्णपात्रं होतृदक्षिणार्थं वस्त्रयुग्मं सुवर्णकांस्यान्युपकल्पयेत्।

ततः आसादितकुशपत्रद्वयमादाय पवित्रछेदनकुशैः प्रादेशमात्रं छित्त्वा पवित्रेस्थ इति- तानपास्य पवित्रेण पवित्रं कृत्वा प्रणीतोदकं प्रोक्षण्यां निधाय उदगग्रपवित्रव्यस्तहस्तयोः अङ्गुष्ठानामिकाभ्यामन्तरादाय तन्मध्येन प्रोक्षण्युदकं त्रिरूर्ध्वं क्षिप्त्वा पवित्रे प्रोक्षण्यां निधाय तत्पात्रं दक्षिणहस्तेनादाय वामे निधाय दक्षिणहस्ताङ्गुष्ठानामिकाभ्यां तज्जलं किञ्चिदूर्ध्वं प्रक्षिप्य प्रणीताजलेन प्रोक्षणीरभिषिच्य तज्जलेन यथासादितं द्रव्यं प्रत्येकं सकृत् प्रोक्ष्य पवित्रशेषजलसहितं पात्रं प्रणीताग्न्योरन्तरे निधाय, आज्यस्थाल्यामाज्यं निरूप्य चरुस्थाल्यां प्रणीतोदकं प्रक्षिप्य, एकत्र प्रदेशे रुद्रहोमार्थं दुग्धं निक्षिप्य प्रणीतोदकेन त्रिः प्रक्षालिततण्डुलान्

चरुस्थाल्यां निक्षिपेत्। स्वयं चरुं ब्रह्मा चाज्यं गृहीत्वा प्रदक्षिणीकृत्य अग्निं पूर्वेण नीत्वा दक्षिणतः आज्यम् उत्तरतः पायसचरुश्रपणार्थं युगपदग्नौ निधाय ज्वलत्तृणमादायाऽऽज्यचर्वोरुपरि प्रदक्षिणं भ्रामयित्वाऽग्नौ क्षिपेत्, स्रुवस्य प्रागग्रस्यावाङ्मुखस्याग्नौ प्रतपनं सम्मार्जनकुशैः सम्मार्ज्जनं प्रणीताजलेन स्रुवस्य प्रोक्षणं पुनः प्रतपनम् आस्तृतबर्हिषि स्वपुरतः प्रागग्रस्थापनं विधाय पाके वृत्ते स्वयं चरुं ब्रह्मा चाज्यमुद्वास्य अग्नेः पश्चिमेन नीत्वाज्यमुत्तरतः पायसचरुं निदध्यात्। प्रोक्षणीतः पवित्रे समानीयाऽऽज्यं प्रोक्षणीवदुत्पूय पवित्रे प्रोक्षण्यां निधाय आज्यमवेक्ष्य सत्यपद्रव्ये तन्निरस्य पुनः प्रोक्षण्युत्पवनं विधाय पायसचरोरुत्तरतः पूर्वसिद्धपिष्टचरुं निधाय होमसमाप्तिपर्यन्तमुपग्रहार्थं कुशैर्वामहस्ते उपग्रहं विधाय प्रजापतिं चिन्तयन्नुत्तिष्ठन् पवित्रे प्रणीतासु निधाय प्रोक्षणीपात्रं स्वस्थाने निदध्यात्।

अथ दक्षिणं जानुं पातयित्वा आज्यं जुहोति स्थाने उपतिष्ठन् प्राङ्मुखोऽन्वारब्धः स्रुवेण षडाज्याहुतीर्दद्यात्।

नो कुर्याद्धोममन्त्राणां पृथगादिषु कुत्रचित्।

अन्येषां चावकृष्टानां कार्यमाचमनादिना॥

– परिशिष्टवचनात्।

ॐकाररहिता षडाज्याहुतीर्दद्यात्। तद्यथा- ब्रह्मणाऽन्वारब्धः स्रुवं गृहीत्वा दक्षिणं जानु नमयित्वा संस्रवं विनैवाज्येन षडाहुतीर्जुहुयात्। स्वाहान्ते होमः।

### ४. हवनम्

**अग्नये स्वाहा, इदमग्नये न मम** । इति त्यागः। **इह रतिः स्वाहा, इदमग्नये०**। **इहरमध्वँ स्वाहा, इदमग्नये०**। **इह धृतिः स्वाहा, इदमग्नये०**। **इह स्वधृतिः स्वाहा, इदमग्नये०**। **उपसृजं धरुणं मात्रे धरुणो मातरन्धयन् स्वाहा, इद मग्नये०**। **रायस्पोषमस्मासु दीधरत् स्वाहा, इदमग्नये०**।

ततो ब्रह्मणान्वारब्धो जुहोति। अग्नेर्दक्षिणभागे (मनसा) - **ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम**।

अग्नेरुत्तरभागे- **ॐ इन्द्राय स्वाहा, इदमिन्द्राय०**।

उत्तरार्द्धे - **ॐ अग्नये स्वाहा, इदमग्नये०**।

दक्षिणपूर्वार्द्धे - **ॐ सोमाय स्वाहा, इदं सोमाय०**।

इत्याघारावाज्यभागौ हुत्वा समिद्धतमेऽग्नौ संस्रवं विनैव पायसेन नवाहुतयो दातव्याः –

**ॐ अग्नये स्वाहा, इदमग्नये न मम**। **ॐ रुद्राय स्वाहा, इदं रुद्राय०**। **ॐ शर्वाय स्वाहा, इदं शर्वाय०**। **ॐ पशुपतये स्वाहा, इदं पशुपतये०**। **ॐ उग्राय स्वाहा, इदमुग्राय०**। **ॐ अशनये स्वाहा, इदमशनये०**। **ॐ भवाय स्वाहा, इदं भवाय०**। **ॐ महादेवाय स्वाहा, इदं महादेवाय०**। **ॐ ईशानाय स्वाहा, इदमीशानाय०**। प्रत्याहुत्युदकस्पर्शः।

ततः पिष्टकेन जुहुयात् -

**ॐ पूषा गाऽअन्वेतु नः पूषा रक्षत्वर्वतः। पूषा वाजꣳसनोतु नः स्वाहा॥ इदं पूष्णे न मम।**

ततः पायसपिष्टकाभ्याम् – **ॐ अग्नये स्विष्टकृते स्वाहा, इदमग्नये स्विष्टकृते न मम।**

ततः आज्येनाग्नेर्मध्यभागे – **ॐ अग्नये स्विष्टकृते स्वाहा, इदमग्नये स्विष्टकृते न मम।**

ततः आज्येनाग्नेर्मध्यभागे – **ॐ भूः स्वाहा, इदमग्नये न मम। ॐ भुवः स्वाहा, इदं वायवे न मम। ॐ स्वः स्वाहा, इदं सूर्याय न मम।**

**ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः।**

**यजिष्ठो वह्नितमः शोशुचानो व्विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् स्वाहा॥**

इदमग्नीवरुणाभ्यां न मम।

**ॐ सत्वन्नोऽअग्ने वमोभवोतीनेदिष्ठोऽअस्याऽउषसो व्युष्टौ।**

**अवयक्ष्वनो वरुणꣳरराणो वीहिमृडीकꣳसुहवो नऽएधि स्वाहा॥**

इदमग्नीवरुणाभ्यां न मम।

**ॐ अयाश्चाग्ने स्यनभिशस्तिपाश्च सत्यमित्त्वमयाऽअसि।**

**अयानो यज्ञं वहास्ययानो धेहि भेषजꣳस्वाहा॥** इदमग्नये न मम।

**ॐ येते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः।**

**तेभिर्नोऽअद्य सवितोतविष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा॥**

इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुदभ्यः स्वर्केभ्यो न मम।

**ॐ उदुत्तमं वरुण पाशमस्मदबाधमं विमध्यमꣳश्रथाय।**

**अथावयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा॥** इदं वरुणाय न मम।

मनसा – **ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम।** एवं हुत्वा,

५. प्रणीताविमोकः

पवित्राभ्यां शिरः सम्मार्जनं कुर्यात् –

**ॐ सुमित्रिया नऽआपऽओषधयः सन्तु।**

तत ऐशान्यां प्रणीताविमोकः –

**दुर्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टि यं च वयं द्विष्मः।**

६. पूर्णाहुतिः

ततो यजमानसहितो होता फलपुष्पान्वितेन घृतेन पूर्णाहुतिं कुर्यात् –

**ॐ मूर्धानन्दिवोऽअरतिं पृथिव्या वैश्वानरमृतऽआजातमग्निम्** ।

**कविꣳसम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः स्वाहा** ॥ इदमग्नये न मम ।

७. बर्हिर्होमः

ततः स्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभिघार्य बर्हिर्होमः –

**ॐ देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पतऽइमन्देवयज्ञꣳस्वाहा वातेधाः** ॥

८. पूर्णपात्रदानम्

ततो यजमानः कुशतिलजलान्यादाय पूर्णपात्रदानम् –

**अद्येत्यादि वृषोत्सर्गाङ्गतया कृतैतद्धोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे** ।

इति ब्राह्मणाय पूर्णपात्रं दद्यात्। स्वस्तीति प्रतिवचनम्।

९. दक्षिणादानम्

ततो वस्त्रयुगसुवर्णकांस्यान्युपनीय, कुशादीन्यादाय दक्षिणादानम् –

**अद्यकृतैतद् वृषोत्सर्गाङ्गभूतहोमकर्मप्रतिष्ठार्थमेतानि वस्त्रयुगसुवर्णकांस्यानि बृहस्पतिवह्निचन्द्रदैवतानि (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय होतृदक्षिणात्वेन तुभ्यमहं सम्प्रददे** ।

इति होत्रे दक्षिणां दद्यात्। स्वस्तीति प्रतिवचनम्।

१०. वृषलक्षणम्

ततो द्विहायनमेकहायनं वा जीवत्सायाः पयस्विन्याः पुत्रं नीलादिवर्णं वृषभमङ्कयित्वा उत्सृजेत् । तल्लक्षणं यथा-

**लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः** ।

**श्वेतः खुरो विषाणाभ्यां स नीलो वृष उच्यते** ॥

इति लक्षणलक्षितं यथालाभं वा आनीय ततश्चतस्रः द्वे एकां वा एकवर्षाधिकां वत्सतरीमानीय अग्निसमीपे सुशिक्षितगोपालेनानीतं वृषभं संवेशयेत्। ततो रुद्राध्यायं पठन् वृषसमीपं गत्वा,

## ११. वृषभस्य पार्श्वभागे त्रिशूलचक्राङ्कनम्

वृषभस्याग्रपाददक्षिणपार्श्वे कुङ्कुमलाक्षारसचन्दनादिना त्रिशूलं लिखेत् –

**ॐ मानस्तोके तनये मानऽआयुषिमानो गोषुमानोऽअश्वेषुरीरिषः।**

**मानो वीरान् रुद्रभामिनोव्वधीर्हविष्मन्तः सदमित्त्वा हवामहे॥**

ततो वृषभस्य पश्चिमपादवामपार्श्वे चक्रं लिखेत् –

**वृषाह्यसि भानुना द्युमन्तं त्वा हवामहे। पवमानः स्वर्दिशम्।**

उक्तमपि छन्दोगपरिशिष्टे –

ततोऽनेनैव गन्धेन मानस्तोकेति ईरयन्।

वृषभस्य दक्षिणे पार्श्वे त्रिशूलाङ्कं समालिखेत्॥

वृषो ह्यसीति सव्ये च चक्राङ्कमपि दर्शयेत्।

तप्तेन पश्चादयसा स्पष्टव्यौ ते च कारयेत्॥

## १२. अयसा वृषभाङ्कनम्

अयसा लोहेन। लोहकारमाहूय- **वृषभमङ्कय** इति ब्रूयात्।

ततोऽग्निसन्तप्तलोहेन शूलं चक्रं च स्पष्टे कारयित्वा तमुत्थाप्य वत्सतरीसहितं वृषभं वक्ष्यमाणमन्त्रैः स्नापयेत्।

## १३. वत्सतरीवृषभस्नानम्

**ॐ हिरण्यवर्णाः शुचयः पावका या सुतः कश्यपो यास्विन्द्रः।**

**अग्निं या गर्भं दधिरे विरूपास्ता नऽआपः शꣳस्योना सुहवा भवन्तु॥**

**यासां राजा वरुणो याति मध्ये सत्यानृतेऽअवपश्यञ्जनानाम्।**

**याऽअग्निं गर्भं दधिरे सुवर्णास्ता नऽआपः शꣳस्योना सुहवा भवन्तु॥**

**यासां देवा दिवि कृण्वन्ति भक्ष्यं याऽअन्तरिक्षे बहुधा भवन्तु।**

**शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचम्मे॥**

**घृतश्च्युतः शुचयो या पावकास्ता नऽआपः शꣳस्योना सुहवा भवन्तु।**

**शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये। शँयोरभिस्रवन्तु नः॥** इति।

## १४. सवत्सतरीं वृषभालङ्करणम्

ततो लोहघण्टिकानूपुरकनकपट्टिकाश्वेतवस्त्रादिभिर्वत्सतरीसहितं वृषभमलङ्कृत्य सावित्रीमघर्षणरुद्रान् पुरुषसूक्तं च पठेत् ।

ॐ यद्देवा देवहेडनन्देवासश्चकृमा व्वयम्। अग्निर्म्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः॥

ॐ यदि दिवा यदि नक्तमेनाꣳसि चकृमा व्वयम्। व्वायुर्म्मा तस्मादेनसो व्विश्वान्मुञ्चत्वꣳहसः॥

ॐ यदि जाग्रद्यदि स्वप्नऽ एनाꣳसि चकृमा व्वयम्। सूर्य्यो मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः॥

इति कूष्माण्डीश्च जपेत्।

## १५. वृषभस्य दक्षिणकर्णे मन्त्रपठनम्

**वत्सानाꣳपतिरघ्न्या नाथो पिता महतां गर्गराणाम्।**

**वत्सो जरायुः प्रतिधुक्पीयूषमामिक्षा घृतं तद्वस्यै रेतः॥**

**वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः।**

**वृणोमि तमहं भक्त्या स मां रक्षतु सर्वतः॥**

इति मन्त्रद्वयं पठित्वा वत्सतरीसहितं वृषभं पूजयेत्।

## १६. वत्सतरीसहितं वृषभपूजनम्

**एषोऽर्घो वत्सतरीसहितवृषभाय नमः। इदमनुलेपनं वत्सतरीसहितवृषभाय नमः। एतानि धूपदीपनैवेद्यानि वत्सतरीसहितवृषभाय नमः।**

## १७. उत्सर्जनम्

सव्येन कुशतिलजलान्यादाय –

**अद्याऽऽशौचान्तद्वितीयेऽह्नि (अमुक) गोत्रस्य (अमुक) प्रेतस्य प्रेतत्वविमुक्तिपूर्वकम् अक्षयस्वर्गप्राप्तिकामो रुद्रदैवतमेतं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण मानः साप्त जनुषाऽसुभगा रायस्पोषेण समिषा मदेम**। इत्युत्सृजेत्।

नीलवृषे नीलपदप्रक्षेपः॥ एतयैवोत्सृजेरन्निति पारस्करवचनात् अनयैव ऋचोत्सर्गः। तत ऐशानीं दिशं वत्सतरीसहितं वृषभं चालयेत्।

## १८. वत्सतरीसहितं वृषभाभिमन्त्रणम्

वत्सतरीमध्यगतं वृषभमभिमन्त्रयेत् –

**मयोभूरभिमावाहि स्वाहा मारुतोऽसिमरुताङ्गणः । शम्भूर्मयोभूरभिमावाहि स्वाहा ॥**

**वस्यूरसि दुवस्वान्छम्भूर्मयोभूरभिमावाहि स्वाहा ।**

**यास्तेऽअग्ने सूर्ये रुचोदिवमातन्वन्ति रश्मिभिः ॥**

**ताभिर्न्नोऽअद्य सर्वाभीरुचे जनाय नस्कृधि ॥**

**या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः ।**

**इन्द्राग्नी ताभिः सर्वाभीरुचन्नो धत्त बृहस्पते ॥**

**रुचन्नो धेहि ब्राह्मणेषु रुचꣳराजसु नस्कृधि ।**

**रुचं विश्येषु शूद्रेषु मयि धेहि रुचारुचम् ॥**

**तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।**

**अहेडमानो वरुणेह बोध्युरुशꣳसमानऽआयुः प्रमोषीः ॥**

**स्वर्णघर्म्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्णशुक्रः स्वाहा स्वर्णज्योतिः स्वाहा**

**स्वर्णसूर्यः स्वाहा** ॥ इति ।

## १९. तर्पणम्

ततः कृतापसव्यो दक्षिणाभिमुखो वामजानु पातयित्वा वृषभपुच्छसहिततिलकुशान्यादाय ताम्रपात्रस्थजलेन मन्त्रस्थफलमुद्दिश्याञ्जलित्रयेण तर्पयेदेभिर्मन्त्रैः -

**स्वधा पितृभ्यो मातृभ्यो बन्धुभ्यश्चापि तृप्तये ।**

**मातृपक्षाश्च ये केचिद् ये चान्ये पितृपक्षजाः ॥**

**गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः ।**

**ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः ॥**

**वृषोत्सर्गेण ते सर्वे लभतां तृप्तिमुत्तमाम्** ॥ इति ।

ततो लोहकारमाहूय अभिमतं वेतनं तस्मै दद्यात्। उत्सृष्टं ब्राह्मणान् श्रावयेत्॥

## २०. उत्सृष्टाया वत्सतर्याः गोमयादिनिषेधः

उत्सृष्टान्नोपयुञ्जीत स्वामी चान्योऽपि मानवः ।

नैवान्यं न च तत् क्षीरं पातव्यं केन कुत्रचित्॥

न वाह्योऽसौ वृषश्चैषामृते गोमूत्रगोमये॥ इति।

पातव्यं केनचित् क्वचिदिति। ततो रुद्राग्रे बहुसर्पिष्कं पायसं ब्राह्मणान् भोजयेत्।

विष्णुः-

होत्रे वस्त्रयुगं दद्यात् सुवर्णं कांस्यमेव च।

अयस्कारस्य दातव्यं वेतनं मनसेप्सितम्॥

ब्रह्मपुराणे -

न च वाह्यो न तत्क्षीरं पातव्यं केनचित् क्वचित्।

अङ्कितं वृषमुत्सृष्टं यो वाहयति दुर्मतिः॥

कुलानि पातयेत् तस्य नरके नात्र संशयः॥

फलश्रुतिः॥ तत्र विष्णुः -

उत्सृष्टो वृषभो यस्मिन् पिबत्यथ जलाशये।

जलाशयः सकमलः पितॄंस्तस्य प्रतिष्ठति॥

शृङ्गाग्रेणोल्लिखेद् भूमिं यत्र क्वचन दर्पितः।

पितॄणामन्नपानं तत् तत्प्रभृत्युपतिष्ठते॥

वृषोत्सर्गाहृते नान्यत् पुण्यमस्ति महीतले।

तस्मात्कुरु वृषोत्सर्गं पितॄणामात्मनोऽपि च॥

छन्दोगपरिशिष्टे -

यमलोके मया दृष्टा भवन्तो यमकिङ्करैः।

पात्यमानास्त एवाद्य कथं स्वर्लोकमागताः॥

प्रेतं विमुच्यतां तात उत्सृष्टो वृषभो भुवि।

शुचिना तेन पुत्रेण तारिता महतो भयात्॥

सर्वेषां चैव यज्ञानां वृषोत्सर्गः समो मतः।

स्पर्द्धते योऽश्वमेधेन क्रतुकोटिसमो यतः॥

आदित्यपुराणे -

यावन्ति रोमकूपाणि वृषभस्य भवन्ति हि।

गवां चैव तु रोमाणि यावन्ति मुनिपुङ्गव॥

तावत्कोटिसहस्राणि रुद्रलोके महीयते।

यत्किञ्चित् कुरुते पापं पुरुषो वृत्तिकर्षितः॥

तत्सर्वं शान्तिमायाति वृषोत्सर्गेण तत्क्षणात्।

वृषभस्य तु शब्देन पितरः सपितामहाः॥

आवर्त्तमाना दृश्यन्ते स्वर्गलोके न संशयः।

यदि प्रक्षिप्य लाङ्गूलं तोयं चोद्धरते वृषः॥

दशवर्षसहस्राणि पितरस्तेन तर्पिताः।

गवां मध्ये सप्त चैव वृषभः क्रीडते तु यत्॥

अप्सरौघसहस्रेण क्रीडन्ति पितरस्ततः।

कूलात् समुद्धृता यावत् शृङ्गे तिष्ठति मृत्तिका॥

भक्ष्यभोज्यमयैः शैलैः पितरस्तेन तर्पिताः।

लाङ्गूलं यावदुद्यम्य तोये प्रक्रीडते तु सः॥

अप्सरौघसहस्रैस्तु हृष्यन्ति पितरः स्वतः।

सहस्ररत्नमात्रेण कनकेन यथाविधि ॥

तृप्तिस्तु यावान् पितृणां सा वै वृषसमोच्यते॥

एवं स्त्रिया अपि- तत्र अद्यामुकगोत्राया अमुकप्रेतायाः इति विशेषः॥

## (ङ) कपिलादानम्

कपिलायाः समीपं गत्वा पुष्पचन्दनधूपदीपनैवेद्यादिभिः पूजयेत् –

**नमो गोभ्यः श्रीमतीभ्यः सोरभेयीभ्य एव च ।**

**नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥**

ततः कुशजलेन गामभ्युक्ष्य कुशादीन्यादाय –

**अद्याशौचान्तद्वितीयेऽह्नि (अमुक) गोत्रस्य (अमुक) प्रेतस्य स्वर्गप्राप्तिकाम इमां कपिलां गां सवत्सां हेमशृङ्गीं रौप्यखुरां ताम्रपृष्ठीं वस्त्रयुगच्छन्नां प्रवाललाङ्गूलभूषितां रुद्रदैवताम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।**

ततः प्रार्थना –

**कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**

**तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ॥**

इत्युक्त्वा दद्यात्। स्वस्तीति प्रतिवचनम्।

ततो दक्षिणाद्रव्यादिकमादाय –

**अद्यकृतैतत् सोपकरणसवत्सकपिलागोदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतम्** (अमुक) **गोत्राय** (अमुक) **शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे** । इति दक्षिणां दद्यात्।

ततः प्रतिग्रहीता कामस्तुतिं पठन् गोपुच्छग्रहणं कुर्यात् –

**ॐ कोदात्कस्माऽअदात् कामोदात् कामायादात्** ।

**कामो दाता कामः प्रतिग्रहीता कामैतत्ते** ॥

यथोक्तकपिलाभावे केवलामपि दद्यात्। ततः सचैलं स्नायात्॥

## (च) एकादशाहे आद्यमासिकश्राद्धप्रयोगः

शुचिराचान्तः शुक्लद्विवासा **भूम्यै नमः** इति पुष्पाक्षतपूजितायां भूमौ दर्भेषु तिष्ठन् कर्ता सवर्णेनाहूतमाचान्तं ब्राह्मणं स्वागतमिति पृच्छेत्। सुस्वागतमिति तेनोक्ते उभावुपविशतः।

### १. ब्राह्मणनिमन्त्रणम्

ततः श्राद्धकर्ताऽपसव्येन पुष्पचन्दनपूगीफलानि ब्राह्मणाय दत्त्वा ब्राह्मणदक्षिणजानु स्पृष्ट्वा-

**अद्य** (अमुक) **सगोत्रस्य** (अमुक) **प्रेतस्याऽऽद्यमासिकश्राद्धकरणाय भवन्तं ब्राह्मणमहम् आमन्त्रये** । आमन्त्रितोऽस्मीति प्रतिवचनम्।

प्रार्थना –

**अक्रोधनैः शौचपरैः सततं ब्रह्मवादिभिः** ।

**भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा** ॥

**सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः** ।

**भवितव्यं भवद्भिर्नोऽद्यतने श्राद्धकर्मणि** ॥

### २. पादार्घः

पात्रब्राह्मणं नियमान् श्रावयेत्। भवितव्यमिति तेनोक्ते अर्घपात्रं वामहस्ते कृत्वा गन्धपुष्पादिनाभ्यर्च्य कुशं गृहीत्वा –

**अद्य** (अमुक) **सगोत्र** (अमुक) **प्रेताऽऽद्यमासिकश्राद्धे एष पादार्घस्ते मया दीयते तवोपतिष्ठताम्** । इति पादार्घं दद्यात्।

ततस्तिलतैलेन विप्रपादौ आजानु अभ्यञ्जयेत्।

ततः स्वयमाचम्य पात्रब्राह्मणमप्याचाम्याग्रे कृत्वा श्राद्धदेशमागत्योपविश्यान्नाभिप्रायेण सिद्धमिति पृच्छेत्।

### ३. ब्राह्मणोपवेशनम्

ततो दक्षिणाग्रं कुशसहितनेपालकम्बलाद्यात्मकमासनमुपकल्प्यासनं स्पृशन्,

**अत्र देवराजाभ्यनुज्ञातो विश्रम्यतां द्विजवर्यानुग्रहात् ।**

**प्रसादये त्वा समगृह्यपूतज्ञानाग्निपूतेन करेण विप्र ॥**

इति मन्त्रं पठित्वा पात्रब्राह्मणं दक्षिणहस्ते धृत्वोदङ्मुखमुपवेशयेत्।

पात्रब्राह्मणस्य पादस्थले दक्षिणाग्रकुशत्रयं दद्यात् । आसनसमीपे च तिलतैलेन घृतेन वा श्राद्धसमाप्तिपर्यन्तस्थापितदीपं दद्यात्। तद्रक्षा च पात्रब्राह्मणेन कार्या। रक्षोघ्नान् गौरसर्षपान् तिलांश्च श्राद्धदेशे विकिरेत्।

### ४. कर्मपात्रनिर्माणम्

कर्मपात्रं निर्माय पूर्वाभिमुखः सव्यं कृत्वा कुशोदकेन श्राद्धीयद्रव्याण्यात्मानं च सिञ्चेत् –

**ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।**

**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥**

पुण्डरीकाक्षः पुनातु, पुण्डरीकाक्षः पुनातु, पुण्डरीकाक्षः पुनातु ।

### ५. प्रतिज्ञासङ्कल्पः

कुशतिलजलान्यादाय प्रतिज्ञां कुर्यात् –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य प्रेतत्वविमुक्त्युत्तमलोकप्राप्तिकामो यथाकालम् आद्यादिषोडशश्राद्धान्यहं करिष्ये ।**

(तस्मिन् वर्षे मरणदिनमारभ्य द्वादशमासेषु मध्ये अधिकमासपतिते षोडशपदस्थाने सप्तदशपदं योज्यम्।)

पुनः कुशतिलजलान्यादाय –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य प्रेतत्वविमुक्त्युत्तमलोकप्राप्तिहेतुः षोडशश्राद्धान्तर्गतम् आद्यमासिकश्राद्धमहं करिष्ये ।**

इति सङ्कल्पय **कुरुष्व** इति ब्राह्मणप्रतिवचनं गृहीत्वा सव्येन त्रिवारं पठेत् –

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥**

## ६. आसनम्

अपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुः कुशादिकमादाय –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्याऽऽद्यमासिकश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठताम् ।** इति दक्षिणाग्रमुत्सृजेत् ।

## ७. छत्रदानम्[४३]

सव्यं कृत्वा प्राङ्मुखोपविष्टः **छत्राय नमः, ब्राह्मणाय नमः** इति देयब्राह्मणौ त्रिः सम्पूज्य छत्रमभिषिच्य कुशादीन्यादाय –

**अद्य (अमुक) सगोत्रस्य (अमुक) यमपथाधिकरणकघोरातपवारणार्थमिदं छत्रमुत्तानाङ्गिरोदैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।**

प्रार्थना –

**सर्वेषामेव दानानां छत्रमातपवारणम् ।**

**सुखदं मोक्षदं यस्मात्तस्माच्छान्ति प्रयच्छतु ॥**

इत्युक्त्वा विप्रहस्ते जलं दद्यात् । स्वस्तीति च विप्रः प्रतिब्रूयात् ।

ततः कुशतिलजलदक्षिणामादाय –

**अद्यकृतैतच्छत्रदानप्रनिष्ठार्थमिदं हिरण्यमग्निदैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय दक्षिणात्वेन तुभ्यमहं सम्प्रददे** । इति दक्षिणां दद्यात् । प्रतिग्रहीता स्वस्तीत्युक्त्वा छत्रदण्डं धारयेत् ।

## ८. उपानद्दानम्

**उपानद्भ्यां नमः । ब्राह्मणाय नमः** । इति देयब्राह्मणौ त्रिः सम्पूज्य उपानहावभिषिच्य कुशादीन्यादाय –

---

४३. उपविश्यासने भद्रे छत्रं तत्र प्रकल्पयेत् । आचार्य्याय च तच्छत्रं ब्राह्मणाय प्रकल्पयेत् ॥
पश्चादुपानहौ दद्यात् सा चैव शिबिका तथा ॥ –इति ब्रह्मपुराणम्
वस्त्रालङ्कारशय्यादि यत् पित्र्युद्वाहनादिकम् । गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रेऽथ तर्पयेत् ॥ –इति बृहस्पतिः

**अद्य (अमुक) गोत्रस्य (अमुक) प्रेतस्य सन्तप्तबालुकाऽसिकण्टकितभूदुर्गसन्तरणार्थम् इमे उपानहौ उत्तानाङ्गिरोदैवते (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।**

प्रार्थना –

**उपानहौ प्रदास्यामि कण्टकादिनिवारणे ।**

**सर्वस्थानेषु सुखदे ह्यतः शान्तिं प्रयच्छतः** ॥ इति दद्यात्, स्वस्तीति प्रतिवचनम्।

कुशादीनि दक्षिणां चादाय –

**अद्य कृतैतद् उपानद्दानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।**

इति दक्षिणां दद्यात्। प्रतिग्रहीता स्वस्तीत्युक्त्वा उपानहावारोहयेत्।

## ९. अश्वदानम्

देयब्राह्मणौ त्रिः सम्पूज्य देयमभिषिच्य कुशादीन्यादाय –

**अद्य (अमुक) गोत्रस्य (अमुक) प्रेतस्यातिविषमदुर्गसन्तरणार्थम् अश्वं यमदैवतं सपर्याणम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।**

प्रार्थना –

**विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः ।**

**चन्द्रार्कवाहनं नित्यमतः शान्तिं प्रयच्छ मे** ॥ इति दद्यात् ।

ततः कुशादीनि दक्षिणां चादाय –

**अद्य कृतैतद् अश्वदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।**

इति दक्षिणां दद्यात्। ततः प्रतिग्रहीता स्वस्तीत्युक्त्वा अश्वस्य दक्षिणकर्णं स्पृशेत्।

## १०. शिबिकादानम्

देयब्राह्मणौ त्रिः सम्पूज्य देयं चाभ्युक्ष्य कुशादीन्यादाय –

**अद्य (अमुक) गोत्रस्य (अमुक) प्रेतस्य उच्चावचविषमभूसन्तरणार्थम् इमां शिबिकाम् उत्तानाङ्गिरोदैवताम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।**

प्रार्थना –

**देवदेव जगन्नाथ विश्वात्मन् दत्तयाऽनया ।**

**प्रभो शिबिकया देव प्रीतो भव जनार्दन** ॥ इति दद्यात्, स्वस्तीति प्रतिवचनम्।

ततः कुशादीनि दक्षिणां चादाय –

**अद्य कृतैतश्वदच्छिबिकादानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।**

इति दक्षिणां दद्यात् । ततः प्रतिग्रहीता स्वस्तीत्युक्त्वा शिबिकां स्पृशेत्।

## ११. तिलविकिरणम्

ततः आचम्यापसव्येन दक्षिणाभिमुखः पातितवामजानुः श्राद्धदेशे वामावर्तेन तिलान् विकिरेत् – **अपहताऽअसुरा रक्षा ꣳ सि वेदिषदः ।**

## १२. हस्तार्घः

हस्तार्घपात्ररूपं पुटकमेकमग्रे कृत्वा तस्मिन् पात्रे दक्षिणाग्रं पवित्रं क्षिपेत् –

**पवित्रेस्थो वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः ।**

तत्र जलम् – **शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शंय्योरभिस्रवन्तु नः ॥**

तत्र तिलान् – **तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान्प्रीणाहि नः स्वाहा ।**

तत्र पुष्पम् – **श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥**

तत्र चन्दनम् – **गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**

एवं हस्तार्घं निर्माय **हस्तार्घपात्रं सम्पन्नम् ?** इति पात्रब्राह्मणं पृष्ट्वा **सुसम्पन्नम्** इति तेनोक्ते हस्तार्घपात्रं वामहस्ते धृत्वा **नमो नारायणाय** इति पुष्पसहितं पवित्रं विप्रहस्ते उत्तराग्रं धृत्वाऽभिमन्त्रयेत् –

**या दिव्याऽआपः पयसा सम्बभूवुर्य्याऽअन्तरिक्षाऽउत पार्थवीर्य्याः ।**

**हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः शꣳस्योनाः सुहवा भवन्तु ॥**

इत्यनेन हस्तार्घपात्रस्थजलमभिमन्त्र्य कुशमादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत आद्यमासिकश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम् ।**

इति विप्रकरे पवित्रोपरि अर्घजलं ददद्युत्सृजेत्। पात्रब्राह्मणस्य वामपार्श्वे **प्रेताय स्थानमसि** इति उत्तानमेव तदर्घपात्रं स्थापयेत्। तदुपरि कुशान् दद्यात् तच्च दक्षिणापर्य्यन्तं न चालयेत् ।

## १३. ब्राह्मणपूजनम्

पात्रब्राह्मणं गन्धपुष्पादिभिः सम्पूज्य कुशादीन्यादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत आद्यमासिकश्राद्धे एतानि चन्दनपुष्पाक्षतधूपदीपयज्ञोपवीतवासांसि ते मया दीयन्ते तवोपतिष्ठन्ताम्** । इत्युत्सृजेत् ।

ततः सव्यं कृत्वा प्रेतस्य भुक्तशय्यासनादीन् गन्धपुष्पैरभ्यर्च्य श्राद्धभोक्त्रे प्रतिपादयेत् । ततः आचम्यापसव्यं कृत्वा **अर्चनविधेः सर्वं परिपूर्णमस्तु** इत्युक्ते ब्राह्मणः **अस्तु** इति प्रतिब्रूयात् । तदनन्तरं गौरमृत्तिकया नीवारचूर्णेन जलेन वा ब्राह्मणं वेष्टयित्वा चतुरस्रं मण्डलं कुर्यात् ।

## १४. भूस्वामी

परकीयभूमौ श्राद्धकरणे श्राद्धीयवस्तुषु किञ्चित् किञ्चिदुद्धृत्य भूस्वामिने दद्यात् –

**तिलघृतजलयुतमन्नमिदमेतद्भूस्वामिपितृभ्यो नमः** । इति

## १५. अन्नसङ्कल्पः

तत उष्णमन्नं ताम्रपात्रेण कराभ्यामादाय मनाक् स्थित्वा पुरुषतृप्तिक्षममन्नं परिविष्यात् । तत **इदं मधुरम्, इदमम्लम्** इत्यादिव्यञ्जनगुणान् कीर्त्तयन् सर्वाणि व्यञ्जनानि भूयिष्ठपात्रान्नेषु परिविष्य घृतं शीतलजलं चोपनीय अन्नं मधुनाभिघारयेत् । ततः पात्रालम्भनाङ्गुष्ठावगाहनं विनैव पठेत् –

**पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽअमृतं जुहोमि स्वाहा** ।

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाꣳसुरे** ॥

इति पठित्वा, अन्नोपरि तिलान् विकिरेत् – **अपहता असुरा रक्षाꣳसि व्वेदिषदः** ।

तदनन्तरम् अमृतरूपतयाऽन्नं विचिन्त्य कुशादीन्यादाय –

**अद्य (अमुक) सगोत्राय (अमुक) प्रेताय आद्यमासिकश्राद्धे इदमन्नं सोपस्करं ते मया दीयते तवोपतिष्ठताम्** । इत्युत्सृजेत् ।

ततो **भवान् प्राशयतु** इत्यपोशानं दत्त्वा **यथासुखं जुषस्व** इति ब्राह्मणं ब्रूयात् । ब्राह्मणश्च वामेन पाणिनान्नपात्रं स्पृशन् भुञ्जीत, संज्ञया च भक्ष्यप्रार्थनं कुर्यात् ।

## १६. प्रार्थना

**मधुवाताऽऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः** ॥

**मधुनक्तमुतोषसो मधुमत्पार्थिवᳬरजः । मधुद्यौरस्तुनः पिता ॥**

**मधुमान्नो वनस्पतिर्मधुमाँऽअस्तु सूर्य्यः । माध्वीर्गावो भवन्तु नः ॥**

**मधु मधु मधु ।**

**अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।**

**तत्सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः ॥**

**नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ।**

**नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥**

वीणादिभिर्ब्राह्मणं हर्षयन् व्यञ्जनगुणान् कीर्त्तयन् तस्य यत्रयत्रेच्छोपलभ्यते तत्तदुपनयन् मन्दं मन्दं भोजयेत्। अत्र विकिरनिषेधः।

ततो ब्राह्मणं तृप्तं ज्ञात्वा तस्मै प्रत्यपोशानं दद्यात् – **जलगण्डूषमिदं ते** इति ।

अत्र स्वदितप्रश्नाभावः।

## १७. पिण्डवेदीनिर्माणम्

ततः **पिण्डदानमहं करिष्ये** इति पृच्छेत् । **कुरुष्व** इति ब्राह्मणेनोक्ते तदुच्छिष्टसमीपे चतुरस्रहस्तैकप्रमाणं दक्षिणप्लवं चतुरङ्गुलोच्छ्रितं पिण्डस्थानं निर्मिमीत। तत्र छिन्नमूलान् कुशान् दक्षिणाग्रान् तत्राऽऽस्तृणुयात् । तत्र रेखाकरणमुल्मुकभ्रामणं च न भवति।

## १८. अवनेजनम्

पवित्रपुटकादिकं तिलजलगन्धपुष्पयुतं वामहस्ते कृत्वा दक्षिणहस्तेन कुशादिकमादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत आद्यमासिकश्राद्धे पिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठताम्** । इति कुशोपरि अवनेजनं दद्यात्।

## १९. पिण्डदानम्

ततः श्राद्धशेषमन्नं तिलघृतमधुयुतमेकीकृत्य तेन कपित्थप्रमाणं पिण्डं निर्माय दक्षिणहस्तेनाऽऽदाय जलतिलकुशादिकं दत्त्वा –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत आद्यमासिकश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठताम्** ।

इत्यवनेजनस्थाने पिण्डं दद्यात्। आस्तृतकुशमूलेन करं प्रोक्ष्य सव्यं कृत्वा आचम्य हरिं स्मृत्वाऽपसव्यं कृत्वा मन्त्रपाठनिषेधात् तूष्णीमेव भास्वरमूर्तिं प्रेतं चिन्तयेत्।

## २०. प्रत्यवनेजनम्

अवनेजनावशिष्टजलयुतपात्रं वामहस्ते कृत्वा दक्षिणहस्तेन कुशादिकमादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत आद्यमासिकश्राद्धे इदं प्रत्यवनेजनं ते मया दीयते तवोपतिष्ठताम्** । इति प्रत्यवनेजनं दद्यात्।

ततो नीवीं विस्रंस्य सव्यं कृत्वाऽऽचामेत् ।

## २१. सूत्रदानम्

ततोऽपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणहस्तेन गृहीत्वा **प्रेतैतत्ते वासः,** इति पिण्डोपरि धृत्वा पिण्डं पूजयेत् ।

## २२. पिण्डपूजनम्

गन्धपुष्पादिभिः पिण्डं सम्पूज्य कुशादीन्यादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत आद्यमासिकश्राद्धे एतानि सूत्रगन्धतपुष्पधूपदीपनैवेद्यानि ते मया दीयन्ते तवोपतिष्ठन्ताम्** । इत्युत्सृजेत्

ततः पिण्डशेषान्नं पिण्डसमीपे विकिरेत्।

तदनन्तरम् आचान्तो ब्राह्मणस्य करे दद्यात् –

**शिवा आपः सन्तु,** इति जलम् । **सौमनस्यमस्तु,** इति पुष्पम् ।

**अक्षतं चारिष्टमस्तु,** इति तण्डुलान् । **सन्तु** इति प्रतिवचनम्।

ततः पुटकादिपात्रे शान्त्युदकं परिकल्प्य मेदिनीं शिरसाभिवन्द्य पठेत् –

**नमो नमो मेदिनि लोकधात्रि ऊर्व्वि महि शैलधारिणि धरणि नमः** ।

**धरणि काश्यपि जगत्प्रतिष्ठे वसुधे नमो नमोऽस्तु ते** ॥

## २३. अक्षय्योदकम्

ततः कुशादीन्यादाय –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य आद्यमासिकश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठताम्** ।

इत्यक्षय्योदकं विप्रहस्ते दत्त्वा **उपतिष्ठताम्** इति प्रतिवचनं गृहीत्वा सव्येन दक्षिणां दिशं पश्यन् पूर्वाग्रां जलधारां पिण्डोपरि दद्यात् – **अघोरः प्रेतोऽस्तु** इति ।

अत्र गोत्रन्नो वर्धताम् इत्याद्याशीः प्रार्थनानिषेधः।

ततोऽपसव्यं कृत्वा सपवित्रकुशत्रयं पिण्डोपरि दक्षिणाग्रं धृत्वा – **नमो वाचयिष्ये** इति पृच्छेत्। **वाच्यताम्** इत्यनुज्ञातः **प्रेताय नम इत्युच्यताम्** इति वदेत्। **अस्तु नमः** इत्युच्यमाने पुटकादिस्थजलादिना मन्त्रपाठं विना -

## २४. जलधारादानम्

ततः सपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्यात् –

**इदमूर्ज्जं ते मया दीयते तवोपतिष्ठताम्।** इति

ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत्। छिन्नमूलकुशान् वह्नौ क्षिपेत्।

## २५. दक्षिणादानम्

अर्घपात्रं सञ्चाल्य सव्यं कृत्वा कुशादिसहितं दक्षिणाद्रव्यमादाय –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य आद्यमासिकश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय दक्षिणात्वेन तुभ्यमहं सम्प्रददे** । इति दक्षिणां दद्यात्। स्वस्तीति प्रतिवचनम्।

अत्र प्रदक्षिणीकरणम् अनुव्रजनं च न भवति।

ततोऽपसव्येन **स्वस्त्यस्तु** इत्युक्त्वा ब्राह्मणमुत्थाप्य शय्यायामुपवेशयेत् । ब्राह्मणचरणौ संवाह्य तं नमस्कुर्यात्। ततोऽञ्जनं कङ्कतिकां च ब्राह्मणायार्पयेत्। स चाञ्जनं कङ्कतिकां चादाय शय्यायां मुहूर्त्तं विश्रामं कुर्यात्।

ततः कर्ता सव्यं कृत्वा त्रिर्जपेत् –

**देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥**

ततोऽपसव्यं कृत्वा श्राद्धीयदीपमाच्छाद्य हस्तौ पादौ प्रक्षाल्य सव्येनाऽऽचमनं कुर्यात्। ततः श्राद्धसम्पूर्णताकामः कर्मसमर्पणं विष्णोः स्मरणञ्च कुर्यात् –

**प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।**

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥**

इति पठित्वा विष्णोः स्मरणं कुर्यात्।

॥ इति षोडशश्राद्धेषु-आद्यमासिकस्य एकादशेऽह्न्येव विधानात्तस्य सपात्रप्रयोगः ॥

## (छ) आद्याब्दिकश्राद्धम्

प्रथममासिकश्राद्धानन्तरं स्नानादिकं विधाय आद्याब्दिकश्राद्धं कुर्यात्, आद्याब्दिकस्य एकादशेऽह्न्येव विधानात्। तच्च सिद्धान्नेनैव विधेयम्,

तत्र प्रयोगः –

कर्त्ता स्नातः शुचिराचान्तः पूर्वोपकल्पितप्रज्वालितदीपं स्थापितगौरसर्षपं तिलादिरक्षोघ्नं श्राद्धदेशमागत्य पूर्वाभिमुख उपविश्य कुशजलेन –

**अपविक्र पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।**

**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ ॐ पुण्डरीकाक्षः पुनातु- ३**

इत्युच्चार्य श्राद्धदेशं द्रव्याण्यात्मानं च सिञ्चेत्।

### १. प्रतिज्ञा

ततः कुशादिकमादाय प्रतिज्ञां कुर्यात् –

**(अद्येत्यादि देशकालौ स्मृत्वा) - अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य आद्याब्दिकश्राद्धमहं करिष्ये ।**

ततः प्रार्थना –

**देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥**

### २. आसनम्

ततोऽपसव्येन कुशादिकमादाय –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य आद्याब्दिकश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठताम्।** इति कुशरूपमासनमुत्सृजेत्।

ततः श्राद्धदेशे वामावर्त्तेन तिलान् विकिरेत् – **अपहताऽअसुरा रक्षाᳬंसि वेदिषदः ।**

## ३. हस्तार्घः

ततः पुटकमेकमग्रे कृत्वा दक्षिणाग्रं पवित्रं प्रक्षिपेत् –

**पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः ॥**

ततो जलम् – **शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये । शंय्योरभिस्रवन्तुनः ॥**

ततस्तिलान् – **तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान् पृणाहिनः ॥**

ततश्चन्दनम् – **गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**

ततः पुष्पम् – **श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।**

**इष्णन्निषाणाऽमुम्म ऽइषाण सर्वलोकम्मऽइषाण ॥**

एवं प्रक्षिप्य तदर्घपात्रं वामहस्ते कृत्वा पुष्पसहितं पवित्रम् उत्तराग्रं **ॐ नमो नारायणाय** इत्यनेन विप्रकरे कृत्वाऽभिमन्त्रयेत् –

**या दिव्याऽआपः पयसा सम्बभूवुर्याऽअन्तरिक्षाऽउत पार्थवीर्याः ।**

**हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः सꣳस्योनाः सुहवा भवन्तु ॥**

इति हस्तार्घपात्रस्थजलमभिमन्त्र्य कुशादीन्यादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत आद्याब्दिकश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम्** । इति पवित्रोपरि अर्घजलं दददुत्सृजेत् ।

ततः पवित्रसहितमर्घपात्रम् आसनस्य वामपार्श्वे **प्रेताय स्थानमसि** इत्युत्तानमेव स्थापयेत् ।

## ४. ब्राह्मणपूजा

ततो गन्धादिना सम्पूज्य कुशादीन्यादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत आद्याब्दिकश्राद्धे एतानि गन्धाक्षतपुष्पधूपदीपनैवेद्यवासांसि ते मया दीयन्ते तवोपतिष्ठन्ताम् ।**

## ५. भूस्वामी

आसनस्यान्नपात्रसहितस्य चतुर्दिक्षु चतुरस्रं मण्डलं कृत्वा श्राद्धीयान्नाग्रभागं तिलघृतजलयुतं पुटकादौ कृत्वा -

**इदमन्नमेतद्भूस्वामिपितृभ्यो नमः** । इत्युत्सृजेत् ।

## ६. अन्नसङ्कल्पः

पुरुषतृप्तिक्षममन्नं सोपस्करमुपनीय सतिलजलं चोपनीय अन्नं मधुनाभिघार्य पात्रालम्भनाङ्गुष्ठावगाहनं विनैव पठेत् –

**पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽअमृतं जुहोमि स्वाहा ।**

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाꣳसुरे ॥**

इति पठित्वा, अन्नोपरि तिलान् विकिरेत् – **अपहता असुरा रक्षाꣳसि व्वेदिषदः ।**

तदनन्तरम् अमृतरूपतयाऽन्नं विचिन्त्य कुशादीन्यादाय –

**अद्य (अमुक) सगोत्राय (अमुक) प्रेताय आद्याब्दिकश्राद्धे इदमन्नं सोपस्करं ते मया दीयते तवोपतिष्ठताम् ।**

इत्यन्नमुत्सृज्य पठेत् –

**मधुव्वाताऽऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥**

**मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः । मधुद्यौरस्तु नः पिता ॥**

**मधुमान्नो वनस्पतिर्म्मधुमाँऽअस्तु सूर्य्यः । माध्वीर्गावो भवन्तु नः ॥ मधु मधु मधु ।**

**अन्नहीनं क्रियाहीनं विधिहीनं च यद् भवेत् ।**

**तत्सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः ॥**

**नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ।**

**नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥**

अत्र विकररेखाकरणमुल्मुकभ्रामणं च न भवति।

## ७. पिण्डवेदीनिर्माणम्

तदनन्तरं चतुरस्रहस्तैकप्रमाणं दक्षिणप्लवं चतुरङ्गुलोच्छ्रितं पिण्डस्थानं निर्मिमीत। तत्र छिन्नमूलान् कुशान् दक्षिणाग्रान् तत्राऽऽस्तृणुयात् । तत्र रेखाकरणमुल्मुकभ्रामणं च न भवति।

## ८. अवनेजनम्

पवित्रपुटकादिकं तिलजलगन्धपुष्पयुतं वामहस्ते कृत्वा दक्षिणहस्तेन कुशादिकमादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत आद्याब्दिकश्राद्धे पिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठताम् ।** इत्यवनेजनं छिन्नमूलकुशोपरि दद्यात्।

९. पिण्डदानम्

ततस्तिलघृतमधुयुक्तेनान्नेन कपित्थप्रमाणं पिण्डं कृत्वा कुशादिकमादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत आद्याब्दिकश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठताम्।**

इत्यवनेजनस्थाने पिण्डं दद्यात्। ततो दर्भमूलेन करं प्रोक्ष्य सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वाऽपसव्यं कृत्वा मन्त्रपाठं विना तूष्णीं भास्वरमूर्तिं प्रेतं चिन्तयेत्।

१०. प्रत्यवनेजनम्

ततोऽवनेजनपात्रं वामहस्ते कृत्वा कुशादिकं गृहीत्वा पिण्डोपरि प्रत्यवनेजनं दद्यात् –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत आद्याब्दिकश्राद्धे इदं प्रत्यवनेजनं ते मया दीयते तवोपतिष्ठताम्।**

ततो नीवीं विस्रंस्य सव्येनाऽऽचामेत्।

११. सूत्रदानम्

अपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनाऽऽदाय उभाभ्यां हस्ताभ्यां पिण्डोपरि सूत्रं दद्यात् – **प्रेतैतत्ते वासः** इति।

१२. पिण्डपूजनम्

ततः पिण्डमभ्यर्च्य कुशादीन्यादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत आद्याब्दिकश्राद्धे एतानि सूत्रगन्धपुष्पधूपदीपनैवेद्यानि ते मया दीयन्ते तवोपतिष्ठन्ताम्।** इत्युत्सृजेत्।

ततः पिण्डशेषान्नं पिण्डसमीपे विकिरेत्।

तदनन्तरम् आचान्तो ब्राह्मणस्य करे दद्यात् –

**शिवा आपः सन्तु,** इति जलम्। **सौमनस्यमस्तु,** इति पुष्पम्।

**अक्षतं चारिष्टमस्तु,** इति तण्डुलान्। **सन्तु** इति प्रतिवचनम्।

१३. अक्षय्योदकदानम्

ततः कुशादीन्यादाय –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य आद्यमासिकश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठताम्** ।

इत्यक्षय्योदकं विप्रहस्ते दत्त्वा सव्येन दक्षिणां दिशं पश्यन् पूर्वाग्रां जलधारां पिण्डोपरि दद्यात् – **अघोरः प्रेतोऽस्तु** इति ।

अत्र गोत्रन्नो वर्धताम् इत्याद्याशीःप्रार्थनं न भवति।

ततोऽपसव्येन पिण्डोपरि सपवित्रान् कुशान् धृत्वा पुटकादिस्थजलादिना मन्त्रपाठं विना –

## १४. जलधारादानम्

सपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्यात् – **ॐ इदमूर्ज्जन्ते मया दीयते तवोपतिष्ठताम्**। ततः पिण्डमाघ्रायोत्थापयेत्। पिण्डाधारकुशान् वह्नौ क्षिपेत्।

## १५. दक्षिणादानम्

अर्घपात्रं सञ्चाल्य सव्यं कृत्वा कुशादीन्यादाय दक्षिणां दद्यात् –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य आद्याब्दिकश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणात्वेन दातुमहमुत्सृजे** ।

## १६. प्रार्थना

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च** ।

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः** ॥ त्रिः पठेत्।

ततोऽपसव्यं कृत्वा दीपमाच्छाद्य हस्तौ पादौ प्रक्षाल्य सव्येनाचम्य विष्णोः स्मरणं कुर्यात् –

**ॐ प्रमादात् कुर्वतां कर्म प्रच्यवेताऽध्वरेषु च** ।

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः** ॥ **ॐ विष्णुः विष्णुः विष्णुः** ।

ततः श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत्। सिद्धान्नं जले क्षिपेत्॥

अत्र दिने विहितमपि पञ्चगव्यप्राशनं शिष्टा नाचरन्तीति न लिखितम्।

॥ इत्याद्याब्दिकश्राद्धप्रयोगः॥

## (ज) अथ उदककुम्भदानम्

मृते पितरि वै तत्र पिण्डमब्दं समापयेत्।
अन्नं कुम्भं च विप्राय प्रेतमुद्दिश्य धर्मतः॥
यावदब्दं तु यो दद्यादुदकुम्भं विमत्सरः।
प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत्॥

– मत्स्यपुराणम्

अर्वाक् सपिण्डीकरणं यस्य संवत्सराद् भवेत्।
तस्याप्यन्नं सोदकुम्भं द्वयं दद्याद् द्विजन्मने॥

– याज्ञवल्क्यः

यस्य संवत्सरादर्वाक् सपिण्डीकरणं कृतम्।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम्॥

– अङ्गिराः

## अथ प्रयोगः

१. प्रतिज्ञासङ्कल्पः

एकादशेऽह्नि कर्त्ता शुचिराचान्तः प्राङ्मुख उपविश्य सव्येन कुशतिलजलान्यादाय प्रतिज्ञां कुर्यात् –

**अद्य पितृगताहरहरन्नोपस्थितिश्वगताश्वमेधयज्ञजन्यसमफलप्राप्तिकामोऽद्यादिपितृमरण-दिनावधिकाऽऽशौचावच्छिन्नदिनोनवत्सरं यावत्प्रत्यहम् (अमुक) गोत्राय (अमुक) प्रेताय सान्नोदककुम्भदानमहं करिष्ये ।**

२. आसनम्

अपसव्यं कृत्वा कुशादीन्यादाय – **अद्य (अमुक) गोत्रस्य (अमुक) प्रेतस्येदमासनं ते मया दीयते तवोपतिष्ठताम् ।** इत्यासनमुत्सृजेत् ।

३. ब्राह्मणार्चनम्

गन्धपुष्पादिना पात्रब्राह्मणस्य पूजां विधाय कुशादीन्यादाय – **अद्य (अमुक) प्रेतैतानि गन्धपुष्पधूपदीपवासांसि ते मया दीयन्ते तवोपतिष्ठन्ताम् ।** इत्युत्सृजेत् ।

४. कुम्भदानम्

सोपस्करमन्नं जलपूर्णं नवं कुम्भं चोपनीय कुशादीन्यादाय – **अद्य (अमुक) गोत्राय (अमुक) प्रेताय अयं सान्नोदककुम्भस्ते मया दीयते तवोपतिष्ठताम्** । इत्युत्सृजेत् ।

वर्षाभ्यन्तरे सपिण्डनकृते तु निम्नाङ्कितादीनि वचनानि प्रयोक्तव्यानि –

***अद्य (अमुक) गोत्रस्य पितुः (अमुक) शर्मण इदमासनं तुभ्यं स्वधा ।***

***अद्य (अमुक) गोत्रं पितरम् (अमुक) शर्मन् एतानि गन्धपुष्पधूपदीपवासांसि तुभ्यं स्वधा ।***

***अद्य (अमुक) गोत्राय पित्रे (अमुक) शर्मणेऽयं सान्नोदककुम्भस्तुभ्यं स्वधा ।***

५. दक्षिणादानम्

त्तो हस्ते दक्षिणां गृहीत्वा कुशादीन्यादाय – **अद्यकृतैतत्सान्नोदककुम्भदानप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे** । इति दक्षिणामुत्सृज्य, दक्षिणां तदुभयं च ब्राह्मणाय दद्यात् । एवं वर्षपर्यन्तं प्रत्यहं सान्नोदककुम्भं दत्त्वा दक्षिणां दद्यात् । अशक्तौ प्रतिमासम् । तत्र तु सङ्कल्पवाक्यम् –

***अद्य पितृगताहरहरन्नोदककुम्भोपस्थितिश्वगताश्वमेधयज्ञजन्यफलप्राप्तिकामोऽद्य सान्नोदक-कुम्भदानमहं करिष्ये ।***सव्येन वाक्यं कृत्वा अपसव्येन आसनादिवाक्यं पूर्ववद् विधाय आशौचान्तदिनोनान् वत्सरदिनसंख्याकान् सान्नोदककुम्भानुपनीय – ***अद्य (अमुक) गोत्राय (अमुक) प्रेताय मरणदिनावधिकाऽऽशौचावच्छिन्नदिनोनवत्सरं यावद्दिनसंख्याकाः एते सान्नोदककुम्भास्ते मया दीयन्ते तवोपतिष्ठन्ताम् ।*** दक्षिणावाक्यं पूर्ववत्कृत्वा सर्वं ब्राह्मणाय दद्यात् ।

॥ इत्युदककुम्भदानविधिः ॥

## (झ) ऊनमासिकादिपञ्चदशश्राद्धानि

ऊनमासिकादीनि पञ्चदशश्राद्धानि च एकादशाहे द्वादशाहे वा सिद्धान्नेन आमान्नेन वा कार्याणि । आमपक्षे यवचूर्णेन पिण्डाः कार्यास्तानि च शिष्टा अपात्रकान्येव कुर्वन्तीति ।

अथ प्रयोगः

कर्त्ता स्नातः शुचिराचान्तः पूर्वोपकल्पितप्रज्वालितदीपं स्थापितगौरसर्षपतिलादिरक्षोघ्नं श्राद्धदेशमागत्य पूर्वाभिमुख उपविश्य कुशजलेन श्राद्धदेशं द्रव्याण्यात्मानं च सिञ्चेत् –

**ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।**

**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥**

**ॐ पुण्डरीकाक्षः पुनातु । ॐ पुण्डरीकाक्षः पुनातु । ॐ पुण्डरीकाक्षः पुनातु ।**

१. प्रतिज्ञासङ्कल्पः

कर्त्ता शुचिराचान्तः प्राङ्मुख उपविश्य सव्येन कुशतिलजलान्यादाय प्रतिज्ञां कुर्यात् –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य प्रेतत्वविमुक्त्युत्तमलोकप्राप्तिहेतुः षोडशश्राद्धान्तर्गतम् उनमासिकश्राद्धमहं करिष्ये** ।

ततः प्रार्थना –

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च** ।

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः** ॥ इति त्रिः ।

२. आसनम्

ततोऽपसव्येन कुशादीन्यादाय - **अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्योनमासिकश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठताम्** । इति कुशरूपमासनमुत्सृजेत् ।

ततः श्राद्धदेशे वामावर्त्तेन तिलान् विकिरेत् – **अपहताऽअसुरा रक्षाᳪसि व्वेदिषदः** ।

३. हस्तार्घः

ततः पुटकमेकमग्रे कृत्वा तत्र दक्षिणाग्रं पवित्रं क्षिपेत् –

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः** ॥

ततो जलम् – **ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये । शंय्योरभिस्रवन्तु नः** ॥

ततस्तिलान् – **ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान् पृणाहि नः** ॥

ततश्चन्दनम् – **ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्** ॥

ततः पुष्पाणि – **ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावरोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणाम्मुम्मऽइषाण सर्वलोकम्मऽइषाण** ॥

इति हस्तार्घं सम्पाद्य तदर्घपात्रं वामहस्ते कृत्वा पुष्पसहितं पवित्रं **ॐ नमो नारायणाय** इति मन्त्रेणान्नपात्रोपरि उत्तराग्रं धृत्वा तत्रस्थं जलमभिमन्त्रयेत् –

**ॐ या दिव्याऽआपः पयसा सम्बभूवुर्य्याऽअन्तरिक्षाऽउत पार्थवीर्याः । हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः सᳪस्योनाः सुहवा भवन्तु** ॥

ततः कुशादीन्यादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत ऊनमासिकाश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम्।** इति पवित्रोपरि अर्घजलं दददुत्सृजेत्।

ततः पवित्रादिसहितमर्घपात्रम् आसनस्य वामपार्श्वे **प्रेताय स्थानमसि** इत्युत्तानमेव स्थापयेत्।

## ४. ब्राह्मणपूजा

ततो गन्धादिना पात्रब्राह्मणं सम्पूज्य कुशादीन्यादाय – **अद्य (अमुक) सगोत्र (अमुक) प्रेत ऊनमासिकश्राद्धे एतानि गन्धपुष्पाक्षतधूपदीपनैवेद्यवासांसि ते मया दीयन्ते तवोपतिष्ठन्ताम्।** इति गन्धादिकमुत्सृजेत्।

## ५. भूस्वामी

आसनस्यान्नपात्रसहितस्य चतुर्दिक्षु चतुरस्रं मण्डलं कृत्वा श्राद्धीयान्नाग्रभागं घृततिलजलयुतं पुटकादौ कृत्वा कुशादीन्यादाय – **इदमन्नमेतद् भूस्वामिपितृभ्यो नमः।** इत्युत्सृजेत्।

## ६. अन्नसङ्कल्पः

ततः पुरुषतृप्तिक्षमं सोपस्करं सतिलं चान्नमुपनीय मधुनाभिघार्य पात्रालम्भनाङ्गुष्ठावगाहनं विना पठेत् –

**ॐ पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा।**

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्यपाꣳसुरे॥**

तदनन्तरम् अन्नोपरि तिलान् विकिरेत् – **अपहताऽअसुरारक्षाꣳसि वेदिषदः।**

ततः कुशादिकमादाय – **अद्य (अमुक) सगोत्र (अमुक) प्रेतोनमासिकश्राद्धे इदमन्नं सोपस्करं ते मया दीयते तवोपतिष्ठताम्।** इत्यन्नमुत्सृजेत्।

ततः प्रार्थना –

**ॐ मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः॥**

**मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः। मधुद्यौरस्तु नः पिता।**

**मधुमान्नो व्वनस्पतिर्म्मधुमाँऽअस्तु सूर्य्यः॥ माध्वीर्गावो भवन्तु नः॥ ॐ मधु मधु मधु।**

**अन्नहीनं क्रियाहीनं विधिहीनं च यद् भवेत्।**

**तत् सर्वमछिद्रमस्तु भास्करस्य प्रसादतः॥**

**नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे।**

**नमः पिनाकहस्ताय वज्रहस्ताय वै नमः॥**

अत्र विकिरदानम्, रेखाकरणम्, उल्मुकभ्रामणं च न भवति ।

सव्येनाऽऽचम्यापसव्यं कृत्वा पिण्डदानवेदीं निर्मायाभ्युक्ष्य च पिण्डस्थानोपरि छिन्नमूलकुशान् दक्षिणाग्रानास्तृणुयात् ।

## ७. अवनेजनम्

तिलजलगन्धयुतं पुटकं वामहस्ते कृत्वा कुशादिकमादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेतोनमासिकश्राद्धे पिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठताम्** । इत्यवनेजनं छिन्नमूलकुशोपरि दद्यात् ।

## ८. पिण्डदानम्

ततस्तिलघृतमधुयुतेनान्नेन नारिकेलप्रमाणं पिण्डं कृत्वा कुशादिसहितं पिण्डमादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेतोनमासिकश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठताम्** । इत्यवनेजनस्थाने पिण्डं दद्यात् ।

ततो दर्भमूलेन करं प्रोक्ष्य सव्येनाऽऽचम्यापसव्यं कृत्वा मन्त्रपाठं विना तूष्णीं भास्वरमूर्तिं प्रेतं ध्यायेत् ।

## ९. प्रत्यवनेजनम्

अवनेजनपात्रं वामहस्ते कृत्वा कुशादिकं गृहीत्वा – **अद्य (अमुक) सगोत्र (अमुक) प्रेतोनमासिकश्राद्धपिण्डे इदं प्रत्यवनेजनं ते मया दीयते तवोपतिष्ठताम्** । इति प्रत्यवनेजनं पिण्डोपरि दद्यात् ।

ततो नीवीं विस्रंस्य सव्येनाऽऽचामेत् ।

## १०. सूत्रदानम्

अपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय उभाभ्यां हस्ताभ्यां पिण्डोपरि सूत्रं दद्यात् – **प्रेतैतत्ते वासः** ।

## ११. पिण्डपूजनम्

गन्धादिभिः पिण्डं समभ्यर्च्य कुशादिकमादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेतोनमासिकश्राद्धपिण्डे एतानि सूत्रगन्धपुष्पाक्षतधूपदीपनैवेद्यानि ते मया दीयन्ते तवोपतिष्ठन्ताम्** । इत्युत्सृजेत् ।

ततः पिण्डशेषान्नं पिण्डसमीपे विकीर्य अन्नपात्रोपरि जलपुष्पतण्डुलान् क्रमेण क्षिपेत् –

**शिवा आपः सन्तु** इति जलम्

**सौमनस्यमस्तु** इति पुष्पम्

**अक्षतं चारिष्टमस्तु** इति तण्डुलान् ।

## १२. अक्षय्योदकदानम्

कुशादिकमादाय –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्योनमासिकश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठताम्** ।

इति अक्षय्योदकं दत्त्वा सव्येन दक्षिणां दिशं पश्यन् पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् –

**अघोरः प्रेतोऽस्तु** इति ।

अत्राशीःप्रार्थनं न भवति । ततः पिण्डोपरि सपवित्रान् कुशान् धृत्वा पुटकस्थजलादिना सपवित्रकुशोपरि मन्त्रपाठं विना दक्षिणाग्रां जलधारां दद्यात् –

**इदमूर्ज्जं ते मया दीयते तवोपतिष्ठताम्** । इति

ततः पिण्डमाघ्रायोत्थापयेत् । पिण्डाधारकुशान् वह्नौ क्षिपेत् ।

## १३. दक्षिणादानम्

अर्घपात्रं सञ्चाल्य सव्यं कृत्वा कुशादिकमादाय –

**अद्य (अमुक) गोत्रस्य (अमुक) प्रेतस्य कृतैतदूनमासिकश्राद्धप्रतिष्ठार्थमिदं रजतं (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे** । इति दक्षिणां दद्यात् ।

## १४. प्रार्थना

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः** ॥ इति त्रिः ।

अपसव्यं कृत्वा दीपमाच्छाद्य हस्तौ पादौ प्रक्षाल्य सव्येनाऽऽचम्य विष्णुं स्मरेत् –

**ॐ प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।**

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥**

**विष्णवे नमः, विष्णवे नमः, विष्णवे नमः ।**

ततः श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत्। एवमेव द्वितीयमासिक-त्रैपाक्षिक-तृतीयमासिक-चतुर्थमासिक-पञ्चममासिक-षाण्मासिक-ऊनषाण्मासिक-सप्तममासिक-अष्टममासिक-नवममासिक-दशममासिक-एकादशमासिक-द्वादशमासिक-ऊनाब्दिकश्राद्धेषु तत्तत्पदप्रक्षेपेण प्रयोग ऊह्यः।

यदि मरणदिनादारभ्य द्वादशमासमध्ये अधिकमासस्तदा तन्मासिकं द्विवारं कार्यम्। आद्यमासिकातिरिक्तानि ऊनमासिकादीनि कालैक्यात् कर्त्रैक्याद् दैवतैक्याच्च तन्त्रेणापि भवन्ति।

## (ञ) अथ तन्त्रेणोनादिपञ्चदशमासिकश्राद्धप्रयोगः

श्राद्धदेशे श्राद्धीयवस्तून्यासाद्य दीपं प्रज्वाल्य कर्ता पूर्वाभिमुख उपविश्य कर्मपात्रं कृत्वा तत्रस्थकुशजलेन श्राद्धदेशं द्रव्याण्यात्मानं च सिञ्चेत् –

**ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा।**

**यः स्मरेत् पुण्डरीकाक्षं सबाह्याऽभ्यन्तरः शुचिः॥ ॐ पुण्डरीकाक्षः पुनातु-३।**

### १. प्रतिज्ञासङ्कल्पः

कुशादिकमादाय प्रतिज्ञां कुर्यात् –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य प्रेतत्वविमुक्त्युत्तमलोकप्राप्तिहेतुः षोडशश्राद्धान्तर्गत-ऊनमासिक-द्वितीयमासिक-त्रैपाक्षिक-तृतीयमासिक-चतुर्थमासिक-पञ्चममासिक-षाण्मासिक-ऊनषाण्मासिक-सप्तममासिक-अष्टममासिक-नवममासिक-दशममासिक-एकादशमासिक-द्वादशमासिक-ऊनाब्दिकश्राद्धानि तन्त्रेणैकोद्दिष्टविधिना एकादशाहे द्वादशाहे वा अहं करिष्ये** । इति ।

अधिकमासपाते षोडशपदस्थाने सप्तदशपदं प्रयोज्यम्। अधिकमासिकेति पदं प्रक्षिप्य वाक्यं कर्त्तव्यम्।

ततस्त्रिः पठेत् –

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः॥**

### २. आसनम्

कुशतिलजलान्यादाय –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य ऊनमासिक-द्वितीयमासिक-त्रैपाक्षिक-तृतीयमासिक-चतुर्थमासिक-पञ्चममासिक-षाण्मासिक-ऊनषाण्मासिक-सप्तममासिक-अष्टममासिक-नवममासिक-दशममासिक-एकादशमासिक-द्वादशमासिक-ऊनाब्दिकश्राद्धेषु इमानि आसनानि ते मया दीयन्ते तवोपतिष्ठन्ताम्।**

इति क्लृप्तासनेषु सर्वपश्चिमभागे कुशरूपमासनमुत्सृज्य एवमेव तत्पूर्वपूर्वभागेषु क्लृप्तासनेषु क्रमेण कुशरूपाण्यासनानि दद्यात्।

ततः श्राद्धदेशे वामावर्त्तेन तिलान् विकिरेत् – **अपहताऽअसुरा रक्षाꣳसि वेदिषदः।**

३. हस्तार्घः

ततः क्रमेण पुटकादीनि संस्थाप्य तेषु दक्षिणग्राणि पवित्राणि निःक्षिपेत् –

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यछिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः॥**

ततो जलम् –

**ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये। शँय्योरभिस्रवन्तु नः॥**

ततस्तिलान् –

**ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान् पृणाहि नः॥**

ततो गन्धम् –

**ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥**

ततः पुष्पाणि –

**ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण॥**

तत ऊनमासिकार्घपात्रं वामहस्ते कृत्वा पुष्पसहितं पवित्रं **नमो नारायणाय** इति मन्त्रेण उत्तराग्रं पवित्रं विप्रकरे धृत्वा तत्रस्थं जलमभिमन्त्रयेत् –

**ॐ यादिव्याऽआपः पयसा सम्बभूवुर्याऽअन्तरिक्षाऽउत पार्थवीर्याः।**

**हिरण्यवर्णा यज्ञियास्ता नऽआपः शिवाः सꣳस्योनाः सुहवा भवन्तु॥**

इत्यभिमन्त्र्य कुशादिकमादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत ऊनमासिकश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम्।** इति पवित्रोपरि अर्घजलं ददद्युत्सृजेत्।

एवमेव क्रमेण प्रत्येकं तत्तत्पदप्रक्षेपेण हस्तार्घमुत्सृजेत्।

ततः पवित्रादिसहितान्यर्घपात्राणि क्रमेण प्रत्येकमासनवामपार्श्वे **प्रेताय स्थानमसि** इति उत्तानमेव स्थापयित्वा तदुपरि कुशान् दद्यात्।

४. ब्राह्मणपूजा

गन्धपुष्पादिक्रमेण प्रत्येकं ब्राह्मणं सम्पूज्य कुशादिकमादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत ऊनमासिक-द्वितीयमासिक-त्रैपाक्षिक-तृतीयमासिक-चतुर्थमासिक-पञ्चममासिक-षाण्मासिक-ऊनषाण्मासिक-सप्तममासिक-अष्टममासिक-नवममासिक-दशममासिक-एकादशमासिक-द्वादशमासिक-ऊनाब्दिकश्राद्धेषु एतानि गन्धपुष्पधूपदीपवासांसि ते मया दीयन्ते तवोपतिष्ठन्ताम्** । इत्युत्सृजेत् ।

ततः क्रमेण प्रत्येकं आसनसहितानामन्नपात्राणां चतुर्दिक्षु चतुरस्राणि मण्डलानि कुर्यात् ।

५. भूस्वामी

श्राद्धीयान्नाग्रभागं घृततिलजलयुतपुटकादौ एकत्रैव कृत्वा -

**इदमन्नमेतद्भूस्वामिपितृभ्यो नमः** । इत्युत्सृजेत् ।

६. अन्नसङ्कल्पः

ततः पुरुषतृप्तिक्षमं सोपस्करमन्नं तिलजलं च क्रमेण प्रत्येकमुपनीय अन्नं मधुनाभिघार्य पात्रालम्भनाङ्गुष्ठावगाहनं विना पठेत् –

**ॐ पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा** ।

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्** । **समूढमस्यपाꣳसुरे** ॥

तदनन्तरम् अन्नोपरि तिलान् विकिरेत् – **अपहताऽअसुरारक्षाꣳसि वेदिषदः** ।

कुशादिकमादाय –

**अद्य (अमुक) गोत्राय (अमुक) प्रेताय ऊनमासिक श्राद्धे इदमन्नं सोपस्करं ते मया दीयते तवोपतिष्ठताम्** । इत्यन्नमुत्सृजेत् ।

एवं क्रमेण प्रत्येकं तत्तत्पदप्रक्षेपेणान्नान्युत्सृज्य पठेत् –

**ॐ मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः** । **माध्वीर्नः सन्त्वोषधीः** ॥

**मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः** । **मधुद्यौरस्तुनः पिता** ॥

**मधुमान्नोव्वनस्पतिर्मधुमाँऽअस्तु सूर्य्यः** । **माध्वीर्गावो भवन्तु नः** ॥ **ॐ मधु-३** ।

**अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत्** ।

**तत्सर्वमछिद्रमस्तु भास्करस्य प्रसादतः** ॥

**नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ।**

**नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥**

अत्र विकिरदानं रेखाकरणम् उल्मुकभ्रामणं च न भवति।

सव्येनाऽऽचम्याऽपसव्यं कृत्वा पश्चिमतः क्रमेण प्रत्येकं पिण्डस्थानोपरि छिन्नमूलान् कुशान् दक्षिणाग्रानास्तृणुयात् ।

## ७. अवनेजनम्

तिलजलगन्धयुतं पुटकादिकं वामहस्ते कृत्वा कुशादिकमादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत ऊनमासिक-द्वितीयमासिक-त्रैपाक्षिक-तृतीयमासिक-चतुर्थमासिक-पञ्चममासिक-षाण्मासिक-ऊनषाण्मासिक-सप्तममासिक-अष्टममासिक-नवममासिक-दशममासिक-एकादशमासिक-द्वादशमासिक-ऊनाब्दिकश्राद्धेषु इमानि अवनेजनानि ते मया दीयन्ते तवोपतिष्ठन्ताम् ।**

इत्यवनेजनं सर्वपश्चिमास्तृतकुशोपरि दत्त्वा एवमेव क्रमेण प्रत्येकं तत्तत्पदप्रक्षेपेणावनेजनानि दद्यात्।

## ८. पिण्डदानम्

ततस्तिलघृतमधुयुतेनान्नेन नारिकेलप्रमाणान् पिण्डान् कृत्वा कुशादिसहितं प्रथमपिण्डमादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत ऊनमासिकश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठताम्** । इति सर्वपश्चिमावनेजनस्थाने पिण्डं दद्यात् ।

एवमेव क्रमेण प्रत्येकं तत्तत्पदप्रक्षेपेण द्वितीयादिपिण्डान् दत्त्वा दर्भमूलेन करं प्रोक्ष्य सव्यं कृत्वाऽचम्य हरिं स्मरेत् ।

## ९. प्रत्यवनेजनम्

अपसव्येन कुशादिकं गृहीत्वा –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत ऊनमासिक-द्वितीयमासिक-त्रैपाक्षिक-तृतीयमासिक-चतुर्थमासिक-पञ्चममासिक-षाण्मासिक-ऊनषाण्मासिक-सप्तममासिक-अष्टममासिक-नवममासिक-दशममासिक-एकादशमासिक-द्वादशमासिक-ऊनाब्दिकश्राद्धपिण्डेषु इमानि प्रत्यवनेजनानि ते मया दीयन्ते तवोपतिष्ठन्ताम् ।**

इति प्रत्यवनेजनानि प्रत्येकं तत्तत्पदप्रक्षेपेण दद्यात्।

ततो नीवीं विस्रंस्य सव्येनाऽऽचम्यापसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय उभाभ्यां हस्ताभ्यां प्रथमपिण्डोपरि सूत्रं दद्यात् – **प्रेतैतत्ते वासः**।

एवं प्रकारेण द्वितीयादिपिण्डेष्वपि प्रत्येकं सूत्रं दद्यात्।

## १०. पिण्डपूजनम्

गन्धादिना क्रमेण पिण्डानभ्यर्च्य कुशादिकमादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत ऊनमासिक-द्वितीयमासिक-त्रैपाक्षिक-तृतीयमासिक-चतुर्थमासिक-पञ्चममासिक-षाण्मासिक-ऊनषाण्मासिक-सप्तममासिक-अष्टममासिक-नवममासिक-दशममासिक-एकादशमासिक-द्वादशमासिक-ऊनाब्दिकश्राद्धपिण्डेषु एतानि गन्धपुष्पधूपदीपनैवेद्यानि ते मया दीयन्ते तवोपतिष्ठन्ताम्**। इत्युत्सृजेत्।

ततः पिण्डशेषान्नं पिण्डसमीपे विकीर्य विप्रकरे जलपुष्पतण्डुलान् क्रमेण दद्यात् –

**ॐ शिवा आपः सन्तु** इति जलम्,

**ॐ सौमनस्यमस्तु** इति पुष्पम्,

**ॐ अक्षतं चारिष्टमस्तु** इति तण्डुलान्।

## ११. अक्षय्योदकम्

ततः कुशादिकमादाय –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य ऊनमासिक-द्वितीयमासिक-त्रैपाक्षिक-तृतीयमासिक-चतुर्थमासिक-पञ्चममासिक-षाण्मासिक-ऊनषाण्मासिक-सप्तममासिक-अष्टममासिक-नवममासिक-दशममासिक-एकादशमासिक-द्वादशमासिक-ऊनाब्दिकश्राद्धेषु दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठताम्**। इत्यक्षय्योदकं दद्यात्।

एवमेव सर्वत्र क्रमेण तत्तत्पदप्रक्षेपेणाक्षय्योदकं दत्त्वा सव्येन दक्षिणां दिशं पश्यन् सर्वेषु पिण्डेषु पूर्वाग्रामेकां जलधारां दद्यात् – **अघोरः प्रेतोऽस्तु**।

अत्राशीःप्रार्थनानिषेधः।

## १२. पयोधारा

ततः सर्वेषु पिण्डेषु क्रमेण सपवित्रान् कुशान् धृत्वा पिण्डस्थसपवित्रकुशोपरि पुटकादिस्थजलादिना मन्त्रपाठं विना दक्षिणाग्रां पयोधारां दद्यात् –

**इदमूर्ज्जं ते मया दीयते तवोपतिष्ठताम्** ।

ततः सव्येन पिण्डानाघ्राय अपसव्येनोत्थापयेत् । पिण्डाधारकुशान् वह्नौ प्रक्षिप्य अर्घपात्राणि सञ्चालयेत् ।

## १३. दक्षिणादानम्

सव्यं कृत्वाऽऽचम्य दक्षिणाद्रव्यसहितकुशादिकमादाय –

**अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य कृतैतदूनमासिक-द्वितीयमासिक-त्रैपाक्षिक-तृतीयमासिक-चतुर्थमासिक-पञ्चममासिक-षाण्मासिक-ऊनषाण्मासिक-सप्तममासिक-अष्टममासिक-नवममासिक-दशममासिक-एकादशमासिक-द्वादशमासिक-ऊनाब्दिकश्राद्धप्रतिष्ठार्थम् इदं रजतं चन्द्रदैवतं नानानामगोत्रेभ्यः शर्मभ्यो ब्राह्मणेभ्यो दक्षिणां दातुमहमुत्सृजे** । इति दक्षिणां दद्यात् ।

## १४. प्रार्थना

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः** ॥ इति त्रिः।

ततोऽपसव्यं कृत्वा दीपाच्छादनं विधाय हस्तौ पादौ प्रक्षाल्याचम्य श्राद्धसम्पूर्णतायै विष्णुं स्मरेत् –

**ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताऽध्वरेषु च ।**

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः । ॐ विष्णवे नमः-३**

श्राद्धीयवस्तूनि ब्राह्मणेभ्यः प्रतिपादयेत् ।

॥ इति षोडशश्राद्धान्तर्गतोनादिमासिकादीनां पञ्चदशानां श्राद्धानां तन्त्रेणैकपात्रप्रयोगः ॥

॥ इति ॥

# सपिण्डीकरणम्

## सपिण्डीकरणे विविधानि वचनानि

मातृविषये शृङ्खः –

मातुः सपिण्डीकरणं कथं कार्यं भवेत् सुतैः।

पितामह्यादिभिः सार्द्धं सपिण्डीकरणं स्मृतम्॥

कारिकायाम् –

पितामहादिभिः सार्द्धं मातरं तु सपिण्डयेत्।

सहगमने यमः –

पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः।

एकत्वं सा गता यस्माच्चरुमन्त्राहुतिव्रतैः॥

पत्नीविषये पैठीनसिः –

अपुत्रायां मृतायां तु पतिः कुर्यात् सपिण्डनम्।

श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्॥

पुत्रिकापुत्रकर्तृके सपिण्डने मनुः –

मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः।

द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुः॥

पतिपुत्ररहितायाः स्त्रियाः सपिण्डनमेव निषिद्धं किन्तु षोडशश्राद्धान्येव भवन्ति।

तथा च मार्कण्डेयः –

स्त्रीणामप्येवमेतदेकोद्दिष्टं विधीयते।

सपिण्डीकरणं तासां पुत्राभावे न विद्यते॥

पुत्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः।

पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोऽपि ये॥

अत्र पुत्राभाव इत्युपलक्षणं तस्मात् पतिपुत्राभावे द्रष्टव्यः, पतिकर्तृकस्य सपिण्डस्य विधानात्। एवं सपत्नीपुत्रेऽपि विद्यमाने स्त्रियाः सपिण्डनं भवति।

बह्वीनामेकपत्नीनामेका चेत् पुत्रिणी भवेत्।

सर्वास्तेनैव पुत्रेण पुत्रिण्यो मनुरब्रवीत्॥

अपुत्रायाः सपत्न्याः पुत्रिणीत्यतिदेशात्। पितुः सपिण्डनं पितामहादिभिः सह कुर्यात्॥

व्युत्क्रममृते तु सपिण्डीकरणं ब्रह्मपुराणे –

मृते पितरि यस्याथ विद्यते च पितामहः।

तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः॥

तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यश्च पूर्ववत्।

मातर्यग्रे मृतायां तु विद्यते च पितामही॥

प्रपितामहीपूर्वं तु कार्यस्तत्र ह्ययं विधिः॥

एवं च जीवन्तमतिक्रम्य त्रिकपूरणं कर्त्तव्यम्। व्युत्क्रमाच्च प्रमीतानां नैव कार्यं सपिण्डनमिति च मातृपितृभर्त्रतिरिक्तविषयम्।

अत एव स्कान्दे –

व्युत्क्रमेण मृतानां च सपिण्डीकृतिरिष्यते।

यदि माता यदि पिता भर्त्ता नैष विधिः स्मृतः॥

विधिरेषः सपिण्डननिषेधरूपः।

यतिविषये उशनाः –

सपिण्डीकरणं तेषां न कर्तव्यं सुतादिभिः।

त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते॥

शूद्रस्य विष्णुः –

मन्त्रवर्जं हि शूद्राणां द्वादशेऽहनि कीर्तितम्।

अमावस्या श्राद्धकारिशूद्रविषयमेतदिति अपरार्के कल्पतरौ च।

यत्तु कात्यायनः –

सर्वेषामेव वर्णानामाशौचान्ते सपिण्डनम्।

एतद्व्यतिरिक्तविषयम्। त्रैवर्णिकजातस्य शूद्रस्य तु शङ्खेन लिख्यते।

नो यतेस्तु सपिण्डत्वं येषां शूद्रकुलोद्भवः।

सर्वे शूद्रत्वमायान्ति यदि स्वर्गजितोऽपि ते॥

तथा च वायुपुराणे –

श्राद्धानि षोडशोऽदत्त्वा न तु कुर्यात् सपिण्डनम्।

प्रपितावसिते पुत्राः कालादपि चिरादपि॥

सपिण्डीकरणे ज्येष्ठपुत्रस्यैवाधिकारः।

यदि षोडशश्राद्धानि कनिष्ठभ्रात्रादिना कृतानि तदा ज्येष्ठः सपिण्डनमेव कुर्य्यात्।

अपरार्के –

इदं वसति ज्येष्ठे तदभावे कनिष्ठेन। तदभावे भ्रात्राद्यधिकारिभिः पुरुषस्य सपिण्डनं कार्यम्।

मनुः –

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा।

सपिण्डीकरणं कुर्यात् पुत्रहीने मृते सति॥

ज्येष्ठेन वा कनिष्ठेन सपिण्डीकरणे कृते।

देशान्तरगतानां च पुत्राणां च कथं भवेत्॥

श्रुत्वा तु वपनं कार्यं दशाहान्तं तिलोदकम्।

सपिण्डीकरणं कुर्यात् तद्वदेकादशेऽहनि॥

द्वादशाहे न कर्तव्यमिति भ्रात्रा यथाऽब्रवीत्॥

स्मृत्यर्थसारे तु ब्रह्मचारिणामनपत्यानां च सपिण्डनं नास्ति तेषां सदैकोद्दिष्टमेव। व्युत्क्रममृतानां व्यवहितं सपिण्डनं कार्यं न वा केचित् सर्वं सपिण्डनमाहुः। यतीनां प्रेतत्वं नास्ति अतस्तेषां नैकोद्दिष्टं न सपिण्डीकरणं किन्त्वेकादशेऽहनि पार्वणं कार्यम्। दण्डग्रहणात्पूर्वं मृते दाहादिसपिण्डनान्तं सर्वं कार्यं भवति। एकाहाशौचे द्वादशेऽहनि तृतीयेऽहनि वा। त्र्यहाशौचे पञ्चमेऽसपिण्डनं कार्यम्। तच्च सपिण्डनमनेककालत्वेऽपि कलौ द्वादशाहे कार्यम् –

आनन्त्यात् कुलधर्माणां पुंसां चैवायुषः क्षयात्।

अनित्यत्वाच्छरीरस्य द्वादशाहे प्रशस्यते॥

गोभिलः –

द्वादशाहादिकालेषु प्रमादादननुष्ठितम्।

सपिण्डीकरणं कुर्यात् कालेषूत्तरभाविषु॥

उत्तरभाविषु त्रिपक्षादिषु। ते च काला भविष्यपुराणे उक्ताः –

सपिण्डीकरणं कुर्याद् यजमानस्त्वनग्निमान्।

अनाहिताग्नेः प्रेतस्य पूर्णाब्दं भरतर्षभ॥

द्वादशाहनि षष्ठे वा त्रिपक्षे वा त्रिमासि वा।

एकादशेऽपि वा मासि मङ्गलं स्यादुपस्थितम्॥ षष्ठे मासीत्यन्वयः।

यदा मङ्गलं वृद्ध्याद्युपस्थितं स्यात्ततः पूर्वमपि कालमिच्छन्ति।

## अथ सपिण्डीकरणप्रयोगः

सपिण्डीकरणे बहुधा अपात्रकमेवाचरन्तीति अपात्रकप्रयोगः –

तत्र मध्याह्ने कर्त्ता स्नातः शुचिराचान्तः पूर्वोपकल्पितं स्थापितगौरसर्षपादिरक्षोघ्नं श्राद्धदेशं गत्वा पूर्वाभिमुख उपविश्य रक्षोघ्नदीपं प्रज्वाल्य सम्पूज्य कर्मपात्रं कुर्यात्। ततः कुशत्रयसहितं कर्मपात्रोदकमादाय –

**अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा।**

**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः॥ ॐ पुण्डरीकाक्षः पुनातु-३।**

इति श्राद्धदेशं द्रव्याण्यात्मानं च सिञ्चेत्।

१. प्रतिज्ञासङ्कल्पः

कुशादीन्यादाय प्रतिज्ञासङ्कल्पं कुर्यात् –

**अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य प्रेतत्वनिवृत्तिपूर्वकं पितृलोकप्राप्त्यर्थम् (अमुक) सगोत्रैरस्मत्पितामह-प्रपितामह-वृद्धप्रपितामहैः (अमुकामुकमुक) शर्मभिः वसुरुद्रादित्यस्वरूपैः सह कालकामविश्वेदेवपूर्वकं सपिण्डीकरणं मृताहाद्द्वादशाहे पार्वणैकोद्दिष्टविधिनाहं करिष्ये।**

मातुः सपिण्डीकरणे तु –

अद्येह (अमुक) सगोत्रायाः (अमुक) प्रेतायाः प्रेतत्वनिवृत्तिपूर्वकं पितृलोकप्राप्त्यर्थम् (अमुक) सगोत्राभिरस्मत्पितामही-प्रपितामही-वृद्धप्रपितामहीभिः (अमुकामुकामुक) देवीभिर्वसुरुद्रादित्यस्वरूपाभिः सह इत्यादिना योजयेत्।

भ्रात्रादीनां सपिण्डीकरणे –

अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य प्रेतत्वनिवृत्तिपूर्वकं पितृलोकप्राप्त्यर्थम् (अमुक) गोत्रैः स्वपितृ-पितामह-प्रपितामहैः (अमुकामुकामुक) शर्मभिर्वसुरुद्रादित्यस्वरूपैः सह इत्यादिना योजयेत्।

सहगमने तु –

अद्येह (अमुक) सगोत्रायाः (अमुक) प्रेतायाः प्रेतत्वनिवृत्तिपूर्वकं पितृलोकप्राप्त्यर्थम् (अमुक) सगोत्रेण स्वभर्त्रा सह सपिण्डीकरणं मृताहाद्द्वादशाहेऽहं करिष्ये । इति विशेषः।

ततस्त्रिः प्रणवव्याहृतिसहितां गायत्रीं जप्त्वा पठेत् –

**देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥** इति त्रिः

२. विश्वेदेवासनम्

ततो देवश्राद्धार्थोपकल्पितासनादिदेशमागत्य सतिलकुशत्रयं गृहीत्वा –

**अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकानां (अमुक) सगोत्राणां पितामह-प्रपितामह-वृद्धप्रपितामहानाम् (अमुकामुकामुक) शर्मणां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां कालकामसंज्ञकानां विश्वेषां देवानामिदमासनं वो नमः ।**

इति पूर्वाग्रं कुशरूपमासनं यवजलप्रोक्षितमुत्सृजेत्।

**ॐ विश्वान् देवानावाहयिष्ये । ॐ विश्वे देवासऽआगत**... इति मन्त्रेणावाह्य,

**ॐ यवोसि यवयास्मद्द्वेषो यवयारातीः**... इति मन्त्रेण श्राद्धदेशे यवान् विकीर्य पठेत् –

**ॐ विश्वेदेवाः शृणुतेमᳫँहवम्मे येऽअन्तरिक्षे यऽउपद्यविष्ठ । येऽअग्निजिह्वाऽउतवा यजत्राऽआसद्यास्मिन् बर्हिषि मादयध्वम् ॥**

**ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।**

**ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥**

३. हस्तार्घः

पुटकादौ पूर्वाग्रं पवित्रं जलयवगन्धपुष्पाणि च स्वस्वमन्त्रैः क्षिपेत्। ततोऽर्घपात्रं वामहस्ते कृत्वा **ॐ नमो नारायणाय** इत्यनेन ब्राह्मणकरे अन्नपात्रे पुष्पसहितं पवित्रं पूर्वाग्रं धृत्वा तत्रस्थजलमभिमन्त्रयेत् –

**ॐ या दिव्याऽआपः पयसा सम्बभूवुर्याऽअन्तरिक्षाऽउत पार्थवीर्याः ।**

**हिरण्यवर्णा यज्ञियास्ता नऽआपः शिवाः शᳫँस्योनाः सुहवा भवन्तु ॥**

कुशयवजलान्यादाय –

**अद्येअ (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकानां (अमुक) सगोत्राणां पितामह-प्रपितामह-वृद्धप्रपितामहानाम् (अमुकामुकामुक) शर्मणां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनः कालकामसंज्ञका विश्वेदेवा एष हस्तार्घो वो नमः।**

इति पवित्रोपरि अर्घजलं ददद्युत्सृजेत्।

ततः पवित्रसहितं तद्देवार्घपात्रमासनदक्षिणपार्श्वे **कालकामविश्वेभ्यो देवेभ्यः स्थानमसि** इति उत्तानमेव स्थापयेत्।

## ४. ब्राह्मणपूजा

ततो गन्धादिभिः ब्राह्मणं सम्पूज्य कुशादिकमादाय –

**अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकानां (अमुक) सगोत्राणां पितामह-प्रपितामह-वृद्धप्रपितामहानाम् (अमुकामुकामुक) शर्मणां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनः कालकामसंज्ञका विश्वेदेवा एतानि गन्धपुष्पधूपदीपवासांसि वो नमः।**

इति गन्धादिकमुत्सृजेत्।

## ५. भूस्वामी

ततोऽपसव्येन दक्षिणाभिमुखो भूत्वा तिलघृतजलयुतमन्नं मोटकादिसहितमादाय –

**इदमन्नमेतद्भूस्वामिपितृभ्यो नमः,** इत्युत्सृजेत्।

## ६. अन्नसङ्कल्पः

सव्यं कृत्वा आसनसहितस्यान्नपात्रस्य चतुर्दिक्षु चतुष्कोणमण्डलं विधाय देवान् ध्यायन् सोपस्करं तिलजलयुतमन्नमुपनीय मधुनाभिघार्य ऋजुहस्ताभ्यामन्नपात्रमालभ्य पठेत् –

**ॐ पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा।**

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्यपाꣳसुरे स्वाहा॥**

ततो विप्रदक्षिणकराङ्गुष्ठं निवेशयेत् –

**ॐ इदमन्नम्** इत्यन्ने। **ॐ इमा आपः** इति जले। **ॐ इदमाज्यम्** इति घृते। **ॐ इदं हविः** इति पुनरन्ने इति।

ततो यवानन्नोपरि प्रक्षिपेत् – **ॐ यवोसि यवयास्मद्वेषो यवयाराती०**

कुशयवजलान्यादाय –

**अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकानां (अमुक) सगोत्राणां पितामह-प्रपितामह-वृद्धप्रपितामहानां (अमुकामुकामुक) शर्मणां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्वन्धिभ्यः कालकामसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नं सोपस्करं वो नमः** । इत्युत्सृजेत् ।

एवं देवकाण्डं निर्वर्त्य हस्तौ पादौ प्रक्षाल्याऽऽचामेत् ।

## ७. आसनम्

ततः प्रेतश्राद्धदेशमागत्योपविश्य कृतापसव्यो दक्षिणाभिमुखः कुशादीन्यादाय –

**अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठताम्** । कुशरूपमासनमुत्सृजेत् । इति प्रेताय ।

ततः पञ्चगव्यं प्राश्य पितृश्राद्धदेशमागत्योपविश्य मोटकादिकमादाय –

**अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्रस्य पितामहस्य (अमुक) शर्मणो वसुस्वरूपस्येदमासनं ते स्वधा** ।

इति पितामहाय मोटकरूपमासनमुत्सृजेत् । एवमेव इतरयोरपि दद्यात् ।

पुनर्मोटकादिकमादाय –

**अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्रस्य प्रपितामहस्य (अमुक) शर्मणो रुद्रस्वरूपस्येदमासनं ते स्वधा** ।

पुनर्मोटकादिकमादाय –

**अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्रस्य वृद्धप्रपितामहस्य (अमुक) शर्मण आदित्यस्वरूपस्येदमासनं ते स्वधा** ।

## ८. आवाहनम्

ततः प्रेतवर्जं पितामहादीनुद्दिश्य **ॐ पितॄनावाहयिष्ये** इति यजमानेनोक्ते **ॐ आवाहय** इति प्रतिवचनानन्तरम् पितामहादीनावाहयेत् –

**ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशतऽआवहपितॄन् हविषेऽअत्तवे** ॥

**ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः** ।

**अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान्** ॥

तदनन्तरं श्राद्धदेशे तिलान् विकिरेत् –

**ॐ अपहताऽअसुरा रक्षाꣳसि वेदिषदः** ।

## ९. हस्तार्घः

ततः प्रेतार्घार्थं पूर्वभागे पुटकमेकमासाद्य तत्पश्चिमभागे पितामहाद्यर्घार्थं दक्षिणसंस्थं पुटकपात्रत्रयमासाद्य तेषु चतुर्ष्वपि पुटकेषु दक्षिणाग्रं पवित्रं जलतिलगन्धपुष्पाणि च तत्तन्मन्त्रैः प्रत्येकं क्षिपेत्।

ततः प्रेतार्घपात्रं वामहस्ते कृत्वा **नमो नारायणाय** इत्यनेन अन्नपात्रोपरि पवित्रं उत्तराग्रं धृत्वा दक्षिणहस्तेन तत्पात्रमाच्छाद्य तत्रस्थजलमभिमन्त्रयेत् –

**या दिव्याऽआपः पयसा सम्बभूवुर्याऽअन्तरिक्षाऽउत पार्थवीर्याः।**

**हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः सꣳस्योनाः सुहवा भवन्तु॥**

कुशादिकमादाय –

**अद्येह (अमुक) गोत्र (अमुक) प्रेत सपिण्डीकरणनिमित्तकश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम्।** इति चतुर्भागजलं पवित्रोपरि दददुत्सृजेत्।

## १०. प्रेतार्घपात्रस्थजलसंयोजनसङ्कल्पः

ततः प्रेतार्घपात्रजलस्य भागत्रयं कृत्वा एकैकं भागं वक्ष्यमाणमन्त्रैः पितामहादिपात्रत्रये संयोजनार्थं कुशादीन्यादाय –

**अद्येह (अमुक) गोत्र (अमुक) प्रेतार्घपात्रोदकम् (अमुक) सगोत्राणां पितामह-प्रपितामह-वृद्धप्रपितामहानाम् (अमुकामुकामुक) शर्मणाम् अर्घपात्रोदकेन संयोजयिष्ये।**

## ११. प्रेतार्घपात्रस्थजलविभाजनम्

*निरूप्य चतुरः पिण्डान् श्राद्धदः प्रतिनामतः।*

*येसमाना इति द्वाभ्यामाद्यं तु विभजेत् त्रिधा॥*

*एष एव विधिः प्रोक्त अर्घपात्रचतुष्टये॥ -मिताक्षरायां स्मृत्यर्थसारे च*

सव्येनाऽऽचम्याऽपसव्यं कृत्वा अन्यत् पुटकत्रयं दक्षिणसंस्थं धृत्वा प्रेतार्घपात्रं गृहीत्वा –

**ये समानाः समनसः पितरो यमराज्ये। तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्॥**

**ये समानाः समनसो जीवा जीवेषु मामकाः।**

**तेषाꣳश्रीर्मयि कल्पतामस्मिँल्लोके शतꣳसमाः॥**

इति मन्त्रद्वयेन अपरतृतीयभागं पुटकान्तरे धृत्वा पुनरपि मन्त्रद्वयं पठित्वा प्रेतार्घपात्रावशिष्टतृतीयभागजलं पुटकान्तरे धृत्वा प्रथमपुटकस्थविभक्तजलतृतीयभागं प्रेतार्घपात्रे कुर्यात्।

## १२. प्रेतार्घपात्रस्थजलमेलनम्

पवित्रपुष्पसहितं प्रेतार्घमादाय –

**ये समानाः समनसः पितरो यमराज्ये । तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥१॥**

**ये समानाः समनसो जीवा जीवेषु मामकाः ।**

**तेषाᳪश्रीर्मयि कल्पतामस्मिँल्लोके शतᳯसमाः ॥२॥**

**संसृजन्तु त्वा पृथिवी वायुरग्निः प्रजापतिः । संसृजध्वं पूर्वेश्चः पितृभिः सह ॥३॥**

**संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् । देवाभागं यथा पूर्वे सञ्जानानामुपासते ॥४॥**

**समानो मन्त्रः समितिः समानी समानं मनः सहचित्तमेषाम् ।**

**समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि ॥५॥**

**समानीव आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति ॥६॥**

**मधुव्वाताऽऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥**

**मधुनक्तमुतोषसो मधुमत्पार्थिवᳯरजः । मधु द्यौरस्तु नः पिता ॥**

**मधुमान्नो वनस्पतिर्मधुमाँऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥** ऋचमपि पठेदिति केचित्

**अद्येह (अमुक) सगोत्र (अमुक) प्रेत (अमुक) सगोत्रेण पितामहेन (अमुक) शर्मणा वसुस्वरूपेण सह सायुज्य गच्छ ।**

इति प्रेतार्घपात्रस्थतृतीयभागजलं पितामहार्घपात्रजले मेलयेत् ।

एवं प्रकारेण द्वितीयं प्रेतार्घमादाय पूर्वोक्तमन्त्रान् पठित्वा **अद्येह (अमुक) सगोत्र (अमुक) प्रेत (अमुक) सगोत्रेण प्रपितामहेन (अमुक) शर्मणा रुद्रस्वरूपेण सह सायुज्य गच्छ** । इति प्रपितामहार्घपात्रजले मेलयेत् ।

एवमेव तृतीयं प्रेतार्घमादाय पूर्वोक्तान् मन्त्रान् पठित्वा **अद्येह (अमुक) सगोत्र (अमुक) प्रेत (अमुक) सगोत्रेण वृद्धप्रपितामहेन (अमुक) शर्मणा आदित्यस्वरूपेण सह सायुज्य गच्छ** । इति वृद्धप्रपितामहार्घपात्रजले मेलयेत् ।

## १३. अर्घपात्रस्थजलाभिमन्त्रणम्, अर्घदानञ्च

पितामहार्घपात्रं वामहस्ते कृत्वा **नमो नारायणाय** इति पवित्रं विप्रपाणौ धृत्वाऽर्घपात्रस्थजलमभिमन्त्रयेत् –

**या दिव्याऽआपः पयसा सम्बभूवुर्याऽअन्तरिक्षाऽउत पार्थवीर्याः ।**

**हिरण्यवर्णा यज्ञियास्ता नऽआपः शिवाः सᳪस्योनाः सुहवा भवन्तु ॥**

ततो मोटकादिकमादाय –

**अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्र/सगोत्रे पितामह/पितामहि (अमुक) शर्मन्/देवि वसुस्वरूप/पे एषोऽर्घस्ते स्वधा** । इति पवित्रोपरि अर्घजलं दददुत्सृज्य पवित्रपुष्पसहितमर्घपात्रमग्रे स्थापयेत् ।

एवमेव प्रकारेण प्रपितामहाद्यर्घपात्रयोश्चाभिमन्त्रणादिकं कुर्यात् ।

ततः प्रेतार्घपात्रं प्रेतासनवामपार्श्वे **प्रेताय स्थानमसि** इत्युत्तानमेव स्थापयित्वा तदुपरि कुशान् दद्यात्।

तदनन्तरं वृद्धप्रपितामहार्घपात्रस्थजलादिकं प्रपितामहार्घपात्रे कृत्वा तत्सर्वं पितामहार्घपात्रे कृत्वा पितामहार्घपात्रमुत्तानं प्रपितामहार्घपात्रोपरि धृत्वा तदुभयपात्रमुत्तानं वृद्धप्रपितामहार्घपात्रोपरि धृत्वा पात्रत्रयमेकदैव पितामहासनवामपार्श्वे **पितामहादिभ्यः स्थानमसि** इति न्युब्जं कृत्वा तदुपरि कुशत्रयं दद्यात्। एवं स्थापितमर्घपात्रचतुष्टयं दक्षिणापर्यन्तं न चालयेत्।

## १४. ब्राह्मणपूजा

गन्धादिभिः प्रेतब्राह्मणं सम्पूज्य कुशादिकमादाय –

**अद्येह (अमुक) सगोत्र (अमुक) प्रेत सण्डिीकरणश्राद्धे एतानि गन्धपुष्पधूपदीपवासांसि ते मया दीयन्ते तवोपतिष्ठन्ताम्** । इत्युत्सृजेत्

एवमेव पितामहादीन् ब्राह्मणान् सम्पूज्य मोटकादीन्यादाय –

**अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सण्डिीकरणनिमित्तकश्राद्धे (अमुक) सगोत्राः पितामह-प्रपितामह-वृद्धप्रपितामहा (अमुकामुकामुक) शर्माणो वसुरुद्रादित्यस्वरूपा एतानि गन्धपुष्पधूपदीपवासांसि युष्मभ्यं स्वधा** । इत्युत्सृजेत्

ततः प्रेतासनस्य चतुर्दिक्षु चतुष्कोणमण्डलं विधाय पितामहादित्रिकार्थमपरं मण्डलं कुर्यात्।

## १५. अग्नौकरणम्

ततः सव्यं कृत्वा प्राङ्मुखः पातितदक्षिणजानुः पुटकादौ सघृतमन्नं कृत्वा पुटकादिजले आहुतिद्वयं जुहुयात् –

**अग्नये कव्यवाहनाय स्वाहा, इदमग्नये कव्यवाहनाय** ।

**सोमाय पितृमते स्वाहा, इदं सोमाय पितृमते** ।

अपसव्यं कृत्वाऽवशिष्टमन्नं पितामहादिपात्रे किञ्चित् दद्यात्।

१६. अन्नदानम्

ततः क्रमेण प्रत्येकं सोपस्करमन्नमुपनीय पृथक्-पृथक् पुटकस्थं सतिलजलं चोपनीय दद्यात् । तत्रादौ प्रेतार्थं पात्रालम्भनाङ्गुष्ठावगाहनं विना पठेत् –

**पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ।**

तदनन्तरं प्रेतान्नोपरि प्रचुरतिलान् प्रक्षिपेत् – **अपहताऽअसुरा रक्षाꣳसि वेदिषदः ।**

ततः कुशादीन्यादाय –

**अद्येह (अमुक) सगोत्राय (अमुक) प्रेताय सपिण्डीकरणश्राद्धे इदमन्नं सोपस्करं ते मया दीयते तवोपतिष्ठताम् ।** इति प्रेतायान्नमुत्सृजेत् ।

ततः पितामहान्नपात्रं व्यस्ताभ्यां हस्ताभ्यां न्युब्जाभ्यामालभ्य पठेत् –

**ॐ पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ।**

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाꣳसुरे ॥**

क्रमेणान्नजलघृतादिषु दक्षिणाङ्गुष्ठं निवेश्य –

**ॐ इदमन्नम्,** इति अन्ने । **ॐ इमा आपः,** इति जले । **ॐ इदमाज्यम्,** इति घृते । **ॐ इदं हविः,** इति पुनरन्ने । **एतान्युपकरणानि ।**

तदनन्तरमन्नोपरि तिलान् प्रक्षिपेत् – **ॐ अपहताऽअसुरा रक्षाꣳसि वेदिषदः ।**

ततो मोटकादीन्यादाय –

**अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्राय पितामहाय (अमुक) शर्मणे वसुस्वरूपायैतदन्नं सोपस्करं स्वधा ।**

इति पितामहायान्नमुत्सृजेत् ।

ततः प्रपितामहान्नपात्रस्याऽऽलम्भनादिकं पूर्ववद् विधाय मोटकादीन्यादाय –

**अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्राय प्रपितामहाय (अमुक) शर्मणे रुद्रस्वरूपायैतदन्नं सोपस्करं स्वधा ।**

इति प्रपितामहायान्नमुत्सृजेत् ।

ततो वृद्धप्रपितामहान्नपात्रस्याप्यालम्भनादिकं पूर्ववद् विधाय मोटकादीन्यादाय –

**अद्येह (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्राय वृद्धप्रपितामहाय (अमुक) शर्मणे आदित्यस्वरूपायैतदन्नं सोपस्करं स्वधा ।**

इति वृद्धप्रपितामहायान्नमुत्सृज्य पठेत् –

**ॐ मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥**

**ॐ मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः । मधुद्यौरस्तु नः पिता ॥**

**ॐ मधुमान्नो वनस्पतिर्मधुमाँऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ ॐ मधु-३ ।**

**अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।**

**तत्सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः ॥**

**नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ।**

**नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥**

## १७. विकिरासनम्

पितामहान्नपात्रसन्निधौ आस्तृतदक्षिणाग्रकुशत्रयायां भूमौ विकिरासनं दद्यात् –

**असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।**

**उच्छिष्टभागधेयानां दर्भेषु विकिरासनम् ॥**

## १८. विकिरदानम्

सतिलघृतमन्नमादाय जलेनाप्लाव्य मोटकं चादायाऽऽस्तृतकुशोपरि तदन्नं विकिरेत् –

**अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।**

**भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥**

## १९. पिण्डिकानिर्माणम्

सव्यं कृत्वा द्विराचम्य हरिं स्मृत्वा अपसव्येन प्रेतपिण्डदानार्थमेकां पितामहादिकपिण्डदानार्थमपरां हस्तमितां चतुरङ्गुलोच्छ्रितां सैकतादिकां दक्षिणप्लवां पिण्डिकां निर्माय प्रेतपिण्डिकायां रेखाकरणोल्मुकभ्रामणं विनैव छिन्नमूलकुशानास्तीर्य अपरपिण्डिकामध्ये वामेन पाणिना दर्भपिञ्जुलीं गृहीत्वा दक्षिणहस्ते कृत्वा तन्मूलेनापसव्योपगृहीतदक्षिणपाणिना दक्षिणाग्रां प्रादेशप्रमाणां सकृदुल्लिखेत् –

**ॐ अपहताऽअसुरा रक्षाꣳसि वेदिषदः** । ततो दर्भपिञ्जुलीमुत्तरस्यां क्षिपेत् ।

ततोऽङ्गारं भ्रामयेत् –

**ॐ ये रूपाणि प्रतिमुञ्चमानाऽअसुराः सन्तः स्वधया चरन्ति ।**

**परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥**

तदङ्गारं दक्षिणतः प्रक्षिप्य पिण्डिकायां छिन्नमूलकुशानास्तृणुयात् ।

ततः सव्यं कृत्वाऽऽचम्य पठेत् –

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**
**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः** । इति त्रिः

## २०. अवनेजनम्

अपसव्येन पुटकद्वये गन्धपुष्पतिलजलानि प्रक्षिप्य पुटकमेकं वामहस्ते कृत्वा कुशादिकमादाय–

**ॐ अद्य (अमुक) सगोत्र (अमुक) प्रेत सपिण्डीकरणश्राद्धपिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठताम्** । इति प्रेतपिण्डिकायां छिन्नमूलकुशोपरि अवनेजनं दद्यात्।

ततोऽपरं पुटकं वामहस्ते कृत्वा मोटकादीन्यादाय –

**ॐ अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धपिण्डस्थाने (अमुक) सगोत्र पितामह (अमुक) शर्मन् वसुस्वरूप अत्रावनेजनं निक्ष्व ते स्वधा** ।

इति द्वितीयपिण्डिकायामास्तृतकुशमूलसन्निधाने पितामहायावनेजनं दद्यात्।

पुनर्मोटकादीन्यादाय –

**ॐ अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धपिण्डस्थाने (अमुक) सगोत्र प्रपितामह (अमुक) शर्मन् रुद्रस्वरूप आत्रावनेजनं निक्ष्व ते स्वधा** ।

आस्तृतकुशमध्ये प्रपितामहायावनेजनं दद्यात्।

पुनर्मोटकादीन्यादाय –

**ॐ अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धपिण्डस्थाने (अमुक) सगोत्र वृद्धप्रपितामह (अमुक) शर्मन् आदित्यस्वरूप आत्रावनेजनं निक्ष्व ते स्वधा** ।

आस्तृतकुशाग्रे वृद्धप्रपितामहायावनेजनं दद्यात्।

## २१. पिण्डदानम्

ततः कपित्थप्रमाणान् चतुरः पिण्डान् निर्माय प्रथमपिण्डं कुशतिलसहितमादाय –

**ॐ अद्य (अमुक) सगोत्र (अमुक) प्रेत सपिण्डीकरणश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठताम्** । इति प्रेतपिण्डिकायाम् अवनेजनोपरि प्रेतपिण्डं दद्यात्।

ततो मोटकादीनि पिण्डं चादाय –

**ॐ अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्र पितामह (अमुक) शर्मन् वसुस्वरूप एष पिण्डस्ते स्वधा** ।

इति द्वितीयपिण्डिकायां प्रथमावनेजनस्थाने पितामहाय पिण्डं दद्यात्।

पुनर्मोटकादीनि पिण्डं चादाय –

**ॐ अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्र प्रपितामह (अमुक) शर्मन् रुद्रस्वरूप एष पिण्डस्ते स्वधा ।**

इति द्वितीयावनेजनस्थाने प्रपितामहाय पिण्डं दद्यात्।

पुनर्मोटकादीनि पिण्डं चादाय –

**ॐ अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्र वृद्धप्रपितामह (अमुक) शर्मन् आदित्यस्वरूप एष पिण्डस्ते स्वधा ।**

इति तृतीयावनेजनस्थाने वृद्धप्रपितामहाय पिण्डं दद्यात्।

तदनन्तरं पितामहादिपिण्डास्तरणकुशमूलेन **ॐ लेपभागभुजस्तृप्यन्तु** इति करं प्रोक्ष्य सव्यं कृत्वाऽऽचम्य हरिं स्मरेत्। ततोऽपसव्येन दक्षिणाभिमुखो भूत्वा मन्त्रपाठं विना भास्वरमूर्तिं प्रेतं चिन्तयेत्।

ततः सव्येन पितामहादीनुद्दिश्य पुष्पादिकं गृहीत्वा वामावर्तेनोत्तराभिमुखो भूत्वा श्वासं नियम्य भास्वरमूर्तिं पितामहादिकं ध्यायेत् –

**ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ।**

ततो दक्षिणावर्तेन दक्षिणाभिमुखो भूत्वा तत्पुष्पादिकं पिण्डेषु क्षिपेत् –

**ॐ अमीमदन्त पितरो यथा भागमावृषायिषत ।**

## २२. प्रत्यवनेजनम्

ततः प्रेतावनेजनपात्रं वामहस्ते कृत्वा कुशादीन्यादाय –

**अद्य (अमुक) सगोत्र (अमुक) प्रेत सपिण्डीकरणश्राद्धपिण्डे इदं प्रत्यवनेजनं ते मया दीयते तवोपतिष्ठताम् ।**

इति प्रेताय प्रत्यवनेजनं दद्यात् ।

ततः पितामहाद्यवनेजनपात्रं वामहस्ते कृत्वा मोटकादीन्यादाय –

**ॐ अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धपिण्डे (अमुक) सगोत्र पितामह (अमुक) शर्मन् वसुस्वरूप इदं प्रत्यवनेजनं ते स्वधा ।**

इति पितामहाय प्रत्यवनेजनं दत्त्वा पुनर्मोटकादीन्यादाय –

**ॐ अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धपिण्डे (अमुक) सगोत्र प्रपितामह (अमुक) शर्मन् रुद्रस्वरूप इदं प्रत्यवनेजनं ते स्वधा ।**

इति प्रपितामहाय प्रत्यवनेजनं दत्त्वा पुनर्मोटकादीन्यादाय –

**ॐ अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धपिण्डे (अमुक) सगोत्र वृद्धप्रपितामह (अमुक) शर्मन् आदित्यस्वरूप इदं प्रत्यवनेजनं ते स्वधा ।**

इति वृद्धप्रपितामहाय प्रत्यवनेजनं दद्यात्।

ततो नीवीं विस्रंस्य सव्येनाऽऽचामेत् ।

## २३. सूत्रदानम्

अपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनाऽऽदाय **प्रेतैतत्ते वासः** इति उभाभ्यां हस्ताभ्यां प्रेतपिण्डोपरि धारयेत्।

पूर्ववत् सूत्रमादाय –

**ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तसतो वः पितरो द्वेष्मैतद्वः पितरो वासः ।**

इति प्रत्येकं पिण्डोपरि सूत्रं धारयेत्।

## २४. पिण्डपूजा

गन्धादिभिः प्रेतपिण्डं सम्पूज्य कुशादिकमादाय –

**ॐ अद्य (अमुक) सगोत्र (अमुक) प्रेत सपिण्डीकरणनिमित्तकश्राद्धपिण्डे एतानि गन्धपुष्पधूपदीपनैवेद्यादीनि ते मया दीयन्ते तवोपतिष्ठन्ताम् ।**

इति प्रेताय गन्धादिकमुत्सृजेत्।

ततोऽपरान् पिण्डान् गन्धादिभिः सम्पूज्य मोटकादीन्यादाय –

**ॐ अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धपिण्डे (अमुक) सगोत्राः पितामहप्रपितामहवृद्धप्रपितामहा (अमुकामुकामुक) शर्माणो वसुरुद्रादित्यस्वरूपा एतानि सूत्रगन्धपुष्पधूपदीपनैवेद्यानि युष्मभ्यं स्वधा ।**

इति पितामहादिभ्यो गन्धादिकमुत्सृज्य पिण्डसमीपे तत्तत्पिण्डशेषान्नं विकिरेत् ।

ततः सव्येन विश्वेदेवान्नपात्रोपरि जलपुष्पतण्डुलान् क्रमेण दद्यात् –

**ॐ शिवा आपः सन्तु** इति जलम्,

**ॐ सौमनस्यमस्तु** इति पुष्पम्,

**ॐ अक्षतं चारिष्टमस्तु** इति तण्डुलान् ।

ततोऽपसव्यं कृत्वा प्रेतान्नपात्रोपरि जलपुष्पतण्डुलान् क्रमेण दद्यात् –

**ॐ शिवा आपः सन्तु** इति जलम्,

**ॐ सौमनस्यमस्तु** इति पुष्पम्,

**ॐ अक्षतं चारिष्टमस्तु** इति तण्डुलान् ।

## २५. अक्षय्योदकदानम्

कुशादिकमादाय –

**ॐ अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे दत्तैतदन्नपानादिकम् अक्षय्यमुपतिष्ठताम्** । इत्यक्षय्योदकं दत्त्वा सव्यं कृत्वा **अघोरः प्रेतोऽस्तु** इति दक्षिणां दिशं पश्यन् पिण्डोपरि पूर्वाग्रां जलधारां दद्यात्।

## २६. पयोधारादानम्

ततः सपवित्रान् कुशान् पिण्डोपरि धृत्वा मन्त्रपाठं विना पुटकादिस्थजलादिना **इदमूर्ज्जं ते मया दीयते तवोपतिष्ठताम्** इति सपवित्रकुशोपरि दक्षिणाग्रां पयोधारां दद्यात्।

दक्षिणादानं विसर्जनं चान्ते सहैव भवति।

## २७. पिण्डविभागः

सुवर्णरूप्यदर्भैस्तु तस्मिन् पिण्डे ततस्त्रिधा।

कृत्वा पितामहादिभ्यः पितृभ्यश्चैनमर्पयेत्॥ -ब्रह्मपुराणम्

सुवर्णरूप्यदर्भैः पिण्डविभागः कर्त्तव्यः।

कुशादीन्यादाय –

**ॐ अद्य (अमुक) सगोत्रस्य (अमुक) प्रेतस्य पिण्डं पितामहादिपिण्डैः सह संयोजयिष्ये** ।

ततः पिण्डे सूत्रादिकमपनीय सुवर्णरजतकुशान् हस्तद्वयेनाऽऽदाय प्रेतपिण्डं त्रिधा विभजेत् –

**ॐ ये समानाः समनसः पितरो यमराज्ये ।**

**तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्** ॥१॥

**ये समानाः समनसो जीवा जीवेषु मामकाः ।**

**तेषाᳬश्रीर्मयि कल्पतामस्मिँल्लोके शतᳬसमाः** ॥२॥ इति

प्रतिविभागं मन्त्रद्वयं पठेत् ।

## २८. पिण्डमेलनम्

त्रिधा विभक्तस्य प्रेतपिण्डप्रथमभागस्य पितामहपिण्डेन सह संयोजनम् ।

प्रथमं पिण्डभागमादाय –

**ये समानाः समनसः पितरो यमराज्ये ।**

**तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥१॥**

**ये समानाः समनसो जीवा जीवेषु मामकाः ।**

**तेषा ꣳ श्रीर्मयि कल्पतामस्मिँल्लोके शत ꣳ समाः ॥२॥**

**संसृजन्तु त्वा पृथिवी वायुरग्निः प्रजापतिः ।**

**संसृजध्वं च पूर्वैस्त्रिभिश्च पितृभिः सह ॥३॥**

**सङ्गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।**

**देवा भागं यथा पूर्वे सञ्जानानामुपासते ॥४॥**

**समानो मन्त्रः समितिः समानी समानं मनः सहचित्तमेषाम् ।**

**समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि ॥५॥**

**समानी व आकूतिः समाना हृदयानि वः ।**

**समानमस्तु वो मनो यथा वः सुसहासति ॥६॥**

**मधुव्वाताऽऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥७॥**

**मधुनक्तमुतोषसो मधुमत्पार्थिव ꣳ रजः । मधुद्यौरस्तु नः पिता ॥८॥**

**मधुमान्नो व्वनस्पतिर्म्मधुमाँऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥९॥**

**अद्येह (अमुक) सगोत्र (अमुक) प्रेत (अमुक) सगोत्रेण पितामहेन (अमुक) शर्मणा वसुस्वरूपेण सह संसृजस्व ।**

इति पितामहपिण्डे संयोज्य दधिमधुभ्यां मिश्रीकृत्य वर्तुलं कुर्यात्।

ततो द्वितीयभागस्य प्रेतपिण्डस्य प्रपितामहपिण्डेन सह संयोजनम् ।

द्वितीयं पिण्डभागमादाय पूर्वोक्तान् मन्त्रान् पठित्वा –

**अद्येह (अमुक) सगोत्र (अमुक) प्रेत (अमुक) सगोत्रेण प्रपितामहेन (अमुक) शर्मणा रुद्रस्वरूपेण सह संसृजस्व ।**

इति प्रपितामहपिण्डे संयोज्य दधिमधुभ्यां मिश्रीकृत्य वर्तुलं कुर्यात्।

ततस्तृतीयभागस्य प्रेतपिण्डस्य वृद्धप्रपितामहपिण्डेन सह संयोजनम् ।

तृतीयं पिण्डभागमादाय पूर्वोक्तमन्त्रान् पठित्वा –

**अद्येह (अमुक) सगोत्र (अमुक) प्रेत (अमुक) सगोत्रेण वृद्धप्रपितामहेन (अमुक) शर्मणा आदित्यस्वरूपेण सह संसृजस्व** ।

इति वृद्धप्रपितामहपिण्डे संयोज्य दधिमधुभ्यां मिश्रीकृत्य वर्तुलं कुर्यात्।

ततः प्रार्थना –

एष वोऽनुगतः प्रेतः पितृभागमवाप्तवान्।

शुभं भवतु शेषाणां जायतां चिरजीविनः॥

## २९. पिण्डार्चनम्

ततः पितृपूर्वकं पितामहादीनुद्दिश्य गन्धपुष्पधूपदीपनैवेद्यादिभिः पिण्डत्रयमभ्यर्च्य मोटकादीन्यादाय –

**ॐ अद्येह (अमुक) सगोत्रस्यास्मत्पितुः (अमुक) शर्मणः सपिण्डीकरणश्राद्धपिण्डे (अमुक) सगोत्राः पितामह-प्रपितामह-वृद्धप्रपितामहा (अमुकामुकामुक) शर्माणो वसुरुद्रादित्यस्वरूपा एतानि गन्धपुष्पधूपदीपनैवेद्यानि युष्मभ्यं स्वधा** । इत्युत्सृजेत्

*(केचित्तु प्रेतपिण्डावयवत्रयेण संयोजितांस्त्रीन् पिण्डानिदानीन्तनं मृतमारभ्य पुरुषत्रयाय पार्वणे पुनरपि नामगोत्राद्युच्चार्य दद्यादित्याहुः)।*

ततः पितामहाद्यन्नपात्रेषु जलपुष्पतण्डुलान् क्रमेण दद्यात् –

**ॐ शिवा आपः सन्तु** इति जलम्,

**ॐ सौमनस्यमस्तु** इति पुष्पम्,

**ॐ अक्षतं चारिष्टमस्तु** इति तण्डुलान् ।

ततः सव्यं कृत्वा कर्मपात्रोदकं कुशैः प्रतिमन्त्रं स्वशिरस्यभिषिञ्चेत् –

**ॐ अस्मत्कुले दीर्घमायुरस्तु** ।

**ॐ शान्तिरस्तु** ।

**ॐ पुष्टिरस्तु** ।

**ॐ वृद्धिरस्तु** ।

**ॐ यच्छ्रेयस्तदस्तु** ।

**ॐ यत्पापं तत् प्रतिहतमस्तु** (इति भूमौ) ।

**ॐ द्विपदे चतुष्पदेभ्यः शान्तिर्भवतु** (इति शिरसि) ।

३०. अक्षय्योदकदानम्

ततोऽपसव्यं कृत्वा मोटकादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्रस्यास्मत्पितुः (अमुक) शर्मणः सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्रस्य अस्मत्पितामहस्य (अमुक) शर्मणो वसुस्वरूपस्य दत्तैतदन्नपानादिकमक्षय्यमस्तु ।**

इति पितामहायाक्षय्योदकं दद्यात् ।

पुनर्मोटकादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्रस्यास्मत्पितुः (अमुक) शर्मणः सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्रस्य अस्मत्प्रपितामहस्य (अमुक) शर्मणो रुद्रस्वरूपस्य दत्तैतदन्नपानादिकमक्षय्यमस्तु ।**

इति प्रपितामहायाक्षय्योदकं दद्यात् ।

पुनर्मोटकादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्रस्यास्मत्पितुः (अमुक) शर्मणः सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्रस्य अस्मद्वृद्धप्रपितामहस्य (अमुक) शर्मण आदित्यस्वरूपस्य दत्तैतदन्नपानादिकमक्षय्यमस्तु ।** इति वृद्धप्रपितामहायाक्षय्योदकं दद्यात् ।

ततः सव्यं कृत्वा कृताञ्जलिर्दक्षिणां दिशमवलोकयन् पितामहादिपिण्डत्रयोपरि पूर्वाग्रां जलधारां दद्यात् – **ॐ अघोराः पितरः सन्तु** इति ।

३१. आशिषः प्रार्थना

सव्येनैव प्राङ्मुख आशिषः प्रार्थयेत् –

(क) **ॐ गोत्रन्नो वर्धताम्** । — **ॐ वर्धताम्** इति प्रतिवचनम् ।

(ख) **ॐ दातारो नोऽभिवर्धन्ताम्** । — **ॐ वर्धन्ताम्** इति प्रतिवचनम् ।

(ग) **ॐ वेदाः वर्धन्ताम्** । — **ॐ वर्धन्ताम्** इति प्रतिवचनम् ।

(घ) **ॐ सन्ततिर्वर्धताम्** । — **ॐ वर्धताम्** इति प्रतिवचनम् ।

(ङ) **ॐ श्रद्धा च नो माव्यगमत्** । — **ॐ मागात्** इति प्रतिवचनम् ।

(च) **ॐ बहुदेयं च नोऽस्तु** । — **ॐ अस्तु** इति प्रतिवचनम् ।

(छ) **ॐ अन्नं च नो बहु भवेत्** । — **ॐ भवतु** इति प्रतिवचनम् ।

(ज) **ॐ अतिथींश्च लभेमहि** । — **ॐ लभध्वम्** इति प्रतिवचनम् ।

(झ) **ॐ याचितारश्च नः सन्तु** । — **ॐ सन्तु** इति प्रतिवचनम् ।

(ञ) **ॐ मा याचिष्म कञ्चन ।** **ॐ मा याचध्वम्** इति प्रतिवचनम् ।

(ट) **ॐ एताः सत्या आशिषः सन्तु ।** **ॐ सन्तु** इति प्रतिवचनम् ।

ततः श्राद्धकर्ता ब्राह्मणहस्तेन तिलकं कुर्यात् ।

### ३२. पयोधारादानम्

अपसव्यं कृत्वा पिण्डोपरि सपवित्रकुशानास्तीर्य जलादिसहितं पयः पुटकं वामहस्ते कृत्वा सपवित्रकुशोपरि दक्षिणाग्रां पयोधारां दद्यात् –

**ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिश्रुतम् । स्वधास्थ तर्प्पयत मे पितॄन् ॥** इति

ततो नम्रीभूय पिण्डानाघ्रायोत्थापयेत् । पिण्डाधारकुशानुल्मुकाँश्च वह्नौ क्षिपेत् ।

सव्येन पिण्डिकायां शङ्खं चक्रं च संलिख्य गन्धादिभिः पूजयेत् –

**ॐ शङ्खाय नमः । ॐ चक्राय नमः ।** इति

अपसव्यं कृत्वा तूष्णीमेव पिण्डान् पिण्डिकोपरि निदध्यात् ।

### ३३. वसन्तादिपूजा

सव्येन पूजयेदेभिर्मन्त्रैः –

**ॐ वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमो नमः ।**

**वर्षाभ्यश्च शरत्संज्ञ ऋतवे च नमो नमः ॥**

**हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च ।**

**माससंवत्सरेभ्यश्च दिवसेभ्यो नमो नमः ॥**

**ॐ वसन्तादिषड्तुभ्यो नमः ।**

ततः कर्पूरदीपं दत्वा विश्वेदेवार्घपात्रं सञ्चाल्य अपसव्येन पितामहाद्यर्घपात्राण्युत्तानीकृत्य दक्षिणां दद्यात् ।

### ३४. दक्षिणादानम्

सव्येन कुशयवजलदक्षिणाद्रव्याण्यादाय –

**ॐ अद्येह (अमुक) सगोत्रस्य अस्मत्पितुः (अमुक) शर्मणः सपिण्डीकरणनिमित्तकानां (अमुक) सगोत्राणां पितामह- प्रपितामह-वृद्धप्रपितामहानां (अमुकामुकामुक) शर्मणां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां कालकामसंज्ञकानां विश्वेषां देवानां कृतैतच्छ्राद्धप्रतिष्ठार्थं हिरण्यमग्निदैवतं (प्रचलितं द्रव्यं ..... दैवतं वा) .....गोत्राय .....शर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे ।**

*विश्वेदेवश्राद्धं सर्वकर्मापसव्येन दक्षिणादानवर्ज्जितः ॥ -इति जमदग्निः*

सव्येनैव कुशतिलजलसहितदक्षिणाद्रव्याण्यादाय –

**ॐ अद्येह (अमुक) सगोत्रस्य अस्मत्पितुः (अमुक) शर्मणः कृतैतत्सपिण्डीकरणश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं (प्रचलितं द्रव्यं .....दैवतं वा) .....गोत्राय ..... शर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे ।**

इति पितृश्राद्धे दक्षिणां दत्त्वा पुनः कुशतिलजलदक्षिणाद्रव्याण्यादाय –

**ॐ अद्येह (अमुक) सगोत्रस्य अस्मत्पितुः (अमुक) शर्मणः कृतैतत्सपिण्डीकरणनिमित्तकश्राद्धे (अमुक) सगोत्राणां पितामह-प्रपितामह-वृद्धप्रपितामहानां (अमुकामुकामुक) शर्मणां वसुरुद्रादित्यस्वरूपाणां श्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं (प्रचलितं द्रव्यं .....दैवतं वा) .....गोत्रेभ्यः ..... शर्मभ्यो ब्राह्मणेभ्यो दक्षिणां दातुमहमुत्सृजे ।**

इति पितामहादिश्राद्धे दक्षिणां दद्यात् ।

### ३५. विश्वेदेवविसर्जनम्

सव्येनैव **ॐ कालकामविश्वेदेवाः प्रीयन्ताम्** । इति विश्वेदेवविसर्जनं कुर्यात् ।

### ३६. पितृविसर्जनम्

अपसव्येन **ॐ स्वस्ति** इति पितृविसर्जनं कृत्वा –

**ॐ वाजे वाजे वत व्वाजिनो नो धनेषु विप्प्राऽअमृताऽऋतज्ञाः ।**

**अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्द्देवयानैः ॥**

इति पितामहादीन् विसर्जयेत् ।

### ३७. प्रार्थना

सव्येन प्रार्थयेत् –

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥** इति त्रिः संप्रार्थयेत्

### ३८. दीपाच्छादनम् विष्णोः स्मरणञ्च

अपसव्येन रक्षोघ्नदीपमाच्छाद्य सव्येन हस्तौ पादौ प्रक्षाल्याऽऽचम्य विष्णोः स्मरणं कुर्यात् –

**ॐ प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।**

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ ॐ विष्णवे नमः-३**

श्राद्धीयवस्तूनि ब्राह्मणाय दद्यात् । पिण्डान् जले प्रतिपादयेत् ।

सहगमने तु पित्रेकोद्दिष्टवन्मात्रेकोद्दिष्टं सहैव विधाय पित्रर्घपात्रं पितामहार्घपात्रे मेलयित्वा–

ॐ अद्येह (अमुक) सगोत्राया अस्मन्मातुः (अमुक) प्रेताया अर्घपात्रोदकम् (अमुक) सगोत्रस्य स्वभर्तुरर्घपात्रोदकेन संयोजयिष्ये। इति मात्र्यर्घपात्रं गृहीत्वा पूर्वोक्तान् मन्त्रान् पठित्वा पित्रर्घपात्रस्थतृतीयभागजलं गन्धयुक्तपितामहार्घपात्रस्थजले मेलयित्वा– (अमुक) सगोत्रे मातरम् (अमुक) प्रेते (अमुक) गोत्रेण स्वभर्त्रा सह सायुज्यं गच्छ।

एवं पितृपिण्डसंयोजनानन्तरम् –

ॐ अद्येह (अमुक) सगोत्राया मातुः (अमुक) प्रेतायाः पिण्डं स्वभर्तुः पिण्डेन संयोजयिष्ये।

मातृपिण्डमादाय सर्वत्र मन्त्रपाठान्ते –

ॐ अद्येह (अमुक) सगोत्रे मातरम् (अमुक) प्रेते (अमुक) सगोत्रेण स्वभर्त्रा (अमुक) शर्मणा संसृजस्वेति वदन् पितृपिण्डप्रथमभागयुक्ते पितामहपिण्डे संयोज्य दधिमधुभ्यां मिश्रीकृत्य वर्तुलं कुर्यात्। मातृश्राद्धे दक्षिणावाक्यं पृथक् कुर्यात्।

तत्रैव सव्येन कुशतिलसहितदक्षिणाद्रव्याण्यादाय –

ॐ अद्येह (अमुक) सगोत्राया अस्मन्मातुः (अमुक) देव्याः कृतैतत् सपिण्डीकरणश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहं उत्सृजे।

सहगमनाभावे मातृसपिण्डीकरणे पितामह्यादिपिण्डत्रये मातृपिण्डं संयोजयेत्। मृतमातृको मात्रादिपिण्डत्रये पत्न्याः पिण्डं संयोजयेत्।

अमृतमातृकस्तु पितामह्यादिपिण्डत्रये पत्न्याः पिण्डं संयोजयेत्।

॥ इति सपिण्डीकरणप्रयोगः ॥

## अथ गणेशपूजा

गणेशं संस्थाप्य पूजयेत् –

**ॐ गणानान्त्वा गणपतिँहवामहे प्रियाणान्त्वा प्प्रियपतिँहवामहे निधीनान्त्वा निधिपतिँहवामहे वसोमम। आहमजानि गर्ब्भधमात्वमजासि गर्ब्भधम्॥**

ततः प्रार्थना –

**वक्रतुण्ड महाकाय कोटिसूर्यसमप्रभ।**

**अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥**

अथ सपिण्डोत्तरपाथेयश्राद्धम्

तच्च सपिण्डीकरणानन्तरं द्वादशेऽह्नि त्रयोदशेऽह्नि वा पुनः पाथेयश्राद्धं कुर्यात्। तच्च पार्वणमेकोद्दिष्टं वा यथाचारेण सिद्धान्नेनामान्नेन वा कुर्यात्।

तत्र क्रमः –

कर्त्ता स्नातः शुचिराचान्तः श्राद्धदेशमागत्य पूर्वाभिमुख उपविश्य पूर्वोपकल्पितप्रज्वालितदीपं स्थापयित्वा गौरसर्षपतिलादिना रक्षोघ्नमपसार्य कर्मपात्रनिर्माणं कृत्वा श्राद्धदेशं द्रव्याण्यात्मानं च सिञ्चेत् –

**ॐ अपवित्र पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।**

**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ ॐ पुण्डरीकाक्षः पुनातु-३**

## १. प्रतिज्ञा

कुशादिकमादाय –

**ॐ अद्येहेत्यादि देशकालौ स्मृत्वा (अमुक) सगोत्रस्यास्मत्पितुः (अमुक) शर्मणो मनुष्यलोकात् पितृलोकगमने सुखसिद्धयर्थं पाथेयश्राद्धं सांवत्सरिकैकोद्दिष्टश्राद्धविधिना अहं करिष्ये ।**

तत्र वाक्ये पाथेयपदप्रक्षेप इति विशेषः ।

ततः प्रार्थना –

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥** इति त्रिः

## २. आसनम्

दक्षिणाभिमुखो वामजानु पातयित्वा मोटकादीन्यादाय –

**ॐ अद्येह (अमुक) सगोत्रस्यास्मत्पितुः (अमुक) शर्मणः पाथेयश्राद्धे इदमासनं ते स्वधा ।**

## ३. हस्तार्घः

पुटकमेकमग्रे कृत्वा तत्र प्रादेशमात्रं पवित्रं दक्षिणाग्रं क्षिपेत् –

**ॐ पवित्रे स्त्थो वैष्णव्यौ सवितुर्व्वः प्प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥**

ततो जलम् -

**ॐ शन्नो देवीरभिष्टयऽआपो भवन्तुपीतये । शँयोरभिस्रवन्तु नः ॥**

ततस्तिलान् -

**ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः ।**

**प्रत्नमद्भिः पृक्तः स्वधया पितृँल्लोकान् पृणाहि नः ॥**

ततश्चन्दनम् -

**ॐ गन्धद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**

ततः पुष्पम् -

**ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।**

**इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण** ॥ इति क्षिपेत् ।

ततस्तदर्घपात्रं वामहस्ते कृत्वा पुष्पसहितं पवित्रं ब्राह्मणकरे **ॐ नमो नारायणाय** इति मन्त्रेणोत्तराग्रं धृत्वा दक्षिणहस्तेन अर्घपात्रमुखमाच्छाद्य तत्रस्थजलमभिमन्त्रयेत् –

**ॐ या दिव्याऽआपः पयसा सम्बभूवुर्याऽअन्तरिक्षाऽउत पार्थवीर्याः ।**

**हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाःसꣳस्योनाः सुहवा भवन्तु ॥**

मोटकादीन्यादाय-

**ॐ अद्येह (अमुक) सगोत्रास्मत्पितः (अमुक) शर्मन्नुत्तरपाथेयश्राद्धे एष हस्तार्घस्ते स्वधा ।**

इति पवित्रोपरि अर्घजलं दददुत्सृजेत् ।

ततः पवित्रसहितमर्घपात्रमासनवामपार्श्वे **ॐ पित्रे स्थानमसि** इति न्युब्जं कृत्वा तदुपरि कुशत्रयं दद्यात् ।

## ४. ब्राह्मणपूजा

गन्धादिना ब्राह्मणं सम्पूज्य मोटकादीन्यादाय –

**ॐअद्येह (अमुक) सगोत्र अस्मत्पितः (अमुक) शर्मन्नुत्तरपाथेयश्राद्धे एतानि गन्धपुष्पाक्षतधूपदीपपूगीफलद्रव्यवासांसि ते स्वधा** । इति गन्धादिकमुत्सृजेत्

तत आसनसहितस्यान्नपात्रस्य चतुर्दिक्षु चतुरस्रं मण्डलं कुर्यात् ।

## ५. भूस्वामी

श्राद्धीयान्नं तिलघृतमधुजलयुतमादाय मोटकादीन्यादाय –

**ॐ इदमन्नं सजलमेतद्भूस्वामिपितृभ्यो नमः** । इत्युत्सृजेत्

## ६. अन्नसङ्कल्पः

ततो व्यञ्जनसहितं तिलघृतमधुजलयुतमन्नमुपनीय मधुनाभिघार्य अधोमुखाभ्यां व्यस्ताभ्यां पाणिभ्यामन्नपात्रमालभेत् –

**ॐ पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽअमृतं जुहोमि ।**

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाॐसुरे ।**

ततस्तिलानन्नोपरि क्षिपेत् – **ॐ अपहताऽअसुरा रक्षाॐसि व्वेदिषदः ।**

क्रमेणान्नजलघृतादिषु विप्रदक्षिणाङ्गुष्ठं निवेश्य –

**ॐ इदमन्नम्,** इति अन्ने । **ॐ इमा आपः,** इति जले । **ॐ इदमाज्यम्,** इति घृते । **ॐ इदं हविः,** इति पुनरन्ने । **एतान्युपकरणानि** ।

मोटकादीन्यादाय दक्षिणहस्तेन विप्रदक्षिणाङ्गुष्ठं समादाय वामहस्ताङ्गुलिभिः क्रमेणान्नमपश्च स्पृष्ट्वा –

**ॐ अद्येह (अमुक) सगोत्राय अस्मत्पित्रे (अमुक) शर्मणे इदमन्नं सजलं सोपस्करं ते स्वधा** । इत्युत्सृजेत्

ततः सव्यं कृत्वा प्रार्थयेत् –

**ॐ मधुव्वाताऽऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥**

**मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः । मधुद्यौरस्तु नः पिता ॥**

**मधुमान्नोव्वनस्पतिर्म्मधुमाँऽअस्तुसूर्यः । माध्वीर्गावो भवन्तुनः ॥ ॐ मधु ३ ।**

**अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।**

**तत्सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः ॥**

## ७. विकिरासनम्

ततोऽपसव्यं कृत्वाऽन्नपात्रसमीपे दक्षिणस्यां भूमौ कुशानास्तीर्य विकिरासनं दद्यात्।

मोटकादीन्यादाय –

**असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।**

**उच्छिष्टभागधेयानां दर्भेषु विकिरासनम् ॥** इत्युत्सृजेत्

## ८. विकिरदानम्

तिलघृतमधुयुतमन्नमादाय जलेनाप्लाव्य मोटकादीन्यादाय –

**अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।**

**भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्** ॥ इत्युत्सृजेत्

कुशान् परित्यज्य सव्येन हस्तौ पादौ प्रक्षाल्याऽऽचम्य विष्णुं स्मृत्वा गायत्रीं जपेत्।

**ॐ मधुव्वाताऽऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः** ॥

**मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः । मधुद्यौरस्तु नः पिता** ॥

**मधुमान्नोव्वनस्पतिर्म्मधुमाँऽअस्तुसूर्यः । माध्वीर्गावो भवन्तुनः** ॥ **ॐ मधु ३** ।

## ९. पिण्डवेदिनिर्माणम् संस्कारश्च

अपसव्येन अन्नपात्रसमीपे पिण्डदानार्थं मृत्पिण्डिकां विधाय तत्र दर्भपिञ्जुलीं गृहीत्वा दक्षिणाग्रां रेखां कुर्यात् –

**ॐ अपहताऽअसुरा रक्षाꣳसिव्वेदिषदः** । ततस्तदुत्तरस्यां क्षिपेत्।

रेखोपरि अङ्गारं भ्रामयेत् –

**ॐ ये रूपाणि प्रतिमुञ्चमानाऽअसुराः सन्तः स्वधया चरन्ति ।**

**परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात्** ॥ ततस्तद्दक्षिणस्यां क्षिपेत्।

ततो वेदिकायां छिन्नमूलकुशानास्तीर्य सव्येन पठेत् –

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः** ॥ इति त्रिः

## १०. अवनेजनम्

अपसव्येन पुटके जलं धृत्वा मोटकादीन्यादाय –

**ॐ अद्येह (अमुक) सगोत्रास्मत्पितः (अमुक) शर्मन्नुत्तरपाथेयश्राद्धे पिण्डस्थाने इदमवनेजनं ते स्वधा** । इत्यवनेजनं कुशोपरि दद्यात्

## ११. पिण्डदानम्

ततस्तिलघृतमधुयुक्तेनान्नेन पिण्डं निर्माय जलतिलमोटकसहितं पिण्डमादाय –

**ॐ अद्येह (अमुक) सगोत्रास्मत्पितः (अमुक) शर्मन्नुत्तरपाथेयश्राद्धे एष पिण्डोऽमृतस्वरूपोऽक्षय्यतृप्तिहेतोस्ते स्वधा** । इत्यवनेजनोपरि पिण्डं दद्यात्

आस्तृतकुशमूलेन करं प्रोक्ष्य सव्यं कृत्वाऽऽचामेत् ।

## १२. पितृध्यानम्

ततो गन्धपुष्पादीन्यादाय पितरमुद्दिश्य उत्तराभिमुखो भूत्वा स्वासं नियम्य भास्वरमूर्तिं पितरं ध्यायेत् –

**ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्** ।

अपसव्यं कृत्वा तेनैव परावर्तमानः पुष्पादीनि पिण्डे निःक्षिपेत् –

**ॐ अमीमदन्त पितरो यथाभागमावृषायिषत** ।

## १३. प्रत्यवनेजनम्

मोटकादीन्यादाय –

**ॐ अद्येह (अमुक) सगोत्रास्मत्पितः (अमुक) शर्मन्नुत्तरपाथेयश्राद्धे इदं पिण्डप्रत्यवनेजनं ते स्वधा** ।

इति प्रत्यवनेजनं पिण्डोपरि दद्यात् । ततो नीवीं विस्रंस्य सव्येनाऽऽचामेत् ।

## १४. सूत्रदानम्

अपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय पिण्डोपरि दद्यात् –

**ॐ नमो वः पितरो रसाय नमोवः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मैतद्वः पितरो वासः** ।

## १५. पिण्डपूजनम्

गन्धपुष्पादिभिः पिण्डं सम्पूज्य धूपदीपौ च कृत्वा मोटकादीन्यादाय –

**ॐ अद्येह (अमुक) सगोत्रास्मत्पितः (अमुक) शर्मन्नुत्तरपाथेयश्राद्धपिण्डे एतानि सूत्रगन्धपुष्पाक्षतधूपदीपैक्षवादिनैवेद्यानि ते स्वधा** । इत्युत्सृजेत्

ततोऽन्नपात्रोपरि जलपुष्पतण्डुलान् क्रमेण दद्यात् –

**ॐ शिवा आपः सन्तु** इति जलम्,

**ॐ सौमनस्यमस्तु** इति पुष्पम्,

**ॐ अक्षतं चारिष्टमस्तु** इति तण्डुलान् ।

१६. कर्मपात्रोदकाभिषेचनम्

सव्यं कृत्वा कर्मपात्रोदकं कुशैर्गृहीत्वा प्रतिमन्त्रं स्वशिरस्यभिषिञ्चेत् –

**ॐ अस्मत्कुले दीर्घमायुरस्तु । ॐ शान्तिरस्तु । ॐ पुष्टिरस्तु । ॐ वृद्धिरस्तु ।**

**ॐ यच्छ्रेयस्तदस्तु । ॐ यत्पापं तत्प्रतिहतमस्तु** इति भूमौ ।

**ॐ द्विपदे चतुष्पदेभ्यः शान्तिर्भवतु** इति शिरसि ।

१७. अक्षय्योदकदानम्

ततोऽपसव्येन मोटकादीन्यादाय –

**ॐ अद्येह (अमुक) सगोत्रस्याऽस्मत्पितुः (अमुक) शर्मण उत्तरपाथेयश्राद्धे दत्तैतदन्नपानादिकम् अक्षय्यमस्तु ।**
इति अक्षय्योदकं दद्यात् ।

सव्यं कृत्वा दक्षिणां दिशं पश्यन् पूर्वाग्रां जलधारां दद्यात् – **ॐ अघोरः पिताऽस्तु** इति ।

१८) आशिषः प्रार्थना

सव्येनैव प्राङ्मुख आशिषः प्रार्थयेत् –

| | |
|---|---|
| (क) **ॐ गोत्रन्नो वर्धताम् ।** | **ॐ वर्धताम्** इति प्रतिवचनम् । |
| (ख) **ॐ दातारो नोऽभिवर्धन्ताम् ।** | **ॐ वर्धन्ताम्** इति प्रतिवचनम् । |
| (ग) **ॐ वेदाः वर्धन्ताम् ।** | **ॐ वर्धन्ताम्** इति प्रतिवचनम् । |
| (घ) **ॐ सन्ततिर्वर्धताम् ।** | **ॐ वर्धताम्** इति प्रतिवचनम् । |
| (ङ) **ॐ श्रद्धा च नो माव्यगमत् ।** | **ॐ मागात्** इति प्रतिवचनम् । |
| (च) **ॐ बहुदेयं च नोऽस्तु ।** | **ॐ अस्तु** इति प्रतिवचनम् । |
| (छ) **ॐ अन्नं च नो बहु भवेत् ।** | **ॐ भवतु** इति प्रतिवचनम् । |
| (ज) **ॐ अतिथींश्च लभेमहि ।** | **ॐ लभध्वम्** इति प्रतिवचनम् । |
| (झ) **ॐ याचितारश्च नः सन्तु ।** | **ॐ सन्तु** इति प्रतिवचनम् । |
| (ञ) **ॐ मा याचिष्म कञ्चन ।** | **ॐ मा याचध्वम्** इति प्रतिवचनम् । |
| (ट) **ॐ एताः सत्या आशिषः सन्तु ।** | **ॐ सन्तु** इति प्रतिवचनम् । |

श्राद्धकर्ता ब्राह्मणहस्तेन तिलकं कृत्वाऽपसव्येन पिण्डोपरि सपवित्रान् कुशानास्तृणुयात् ।

## १९. पयोधारादानम्

जलदुग्धयुतं पुटकं वामहस्ते कृत्वा दक्षिणाग्रां पयोधारां पिण्डोपरि दद्यात् –

**ॐ ऊर्ज्जं वहन्तीरमृतङ्घृतम्पयः कीलालं परिस्रुतम्** । **स्वधास्थ तर्पयत मे पितॄन्** ॥

ततः सव्येन नम्रीभूय पिण्डमाघ्रायापसव्येनोत्थापयेत्। पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत्।

## २०. शङ्खचक्रपूजनम्

सव्येन पिण्डिकायां शङ्खं चक्रं च लिखित्वा यवैः पूजयेत् –

**ॐ शङ्खाय नमः** । **ॐ चक्राय नमः** ।

अपसव्यं कृत्वा तूष्णीमेव पिण्डिकोपरि पिण्डं निदध्यात् ।

## २१. वसन्तादिपूजा

सव्येन पूजयेदेभिर्मन्त्रैः –

**ॐ वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमो नमः** ।

**वर्षाभ्यश्च शरत्संज्ञ ऋतवे च नमो नमः** ॥

**हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च** ।

**माससंवत्सरेभ्यश्च दिवसेभ्यो नमो नमः** ॥

**ॐ वसन्तादिषड्ऋतुभ्यो नमः** ।

ततः कर्पूरदीपं दत्वाऽपसव्येनार्घपात्रमुत्तानीकृत्य सव्येन दक्षिणाद्रव्यं कुशादिकमादाय –

## २२. दक्षिणादानम्

**ॐ अद्येह (अमुक) सगोत्रस्यास्मत्पितुः (अमुक) शर्मणः कृतैतदुत्तरपाथेयश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं तन्निष्क्रयद्रव्यं वा यथानामदैवतं यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे** । इति दक्षिणां दद्यात्।

## २३. पितृविसर्जनम्

अपसव्येन –

**ॐ वाजे वाजे व्वत व्वाजिनो नो धनेषु विप्प्राऽअमृताऽऋतज्ञाः । अस्य मद्ध्वः पिबत मादयध्वं तृप्ता यातपथिभिर्देवयानैः** । इति पितृविसर्जनम् ।

ततः सव्येन प्रार्थयेत् –

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः** ॥ इति त्रिः

अपसव्येन दीपाऽऽच्छादनं विधाय सव्येन हस्तौ पादौ प्रक्षाल्याऽऽचम्य विष्णुं स्मरेत् ।

२४. विष्णोःस्मरणम्

**ॐ प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।**

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः** ॥ **ॐ विष्णवे नमः-३**

श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत् ।

॥ इत्युत्तरपाथेयश्राद्धम् ॥

# पञ्चकमरणविधिः

गरुडपुराणे –

आदौ कृत्वा धनिष्ठार्द्धमेतन्नक्षत्रपञ्चकम्।
रेवत्यन्तं सदा दुष्यं न शुभं सर्वदा भवेत्॥
दाहस्तत्र न कर्त्तव्यो विषादः सर्वजन्तुषु।
न दीयते जलं तत्र ह्यशुभं सर्वदा भवेत्॥
पञ्चकानन्तरं कार्यं कर्त्तव्यं सर्वदान्यथा।
पुत्राणां गोत्रिणां तस्य सन्तापो ह्युपजायते॥
गृहे हानिर्भवेत् पृष्ठे ऋक्षेष्वेषु मृतस्तु यः॥

ब्रह्मपुराणे –

कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते।
न तस्योर्ध्वगतिर्दृष्टा सन्ततौ न शुभं भवेत्॥
न तस्य दाहः कर्त्तव्यो विनाशः स्वेषु जन्तुषु।
पञ्चकानन्तरं कार्यं तस्य दाहादिकं खलु॥
अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकः।
धनिष्ठापञ्चके जीवो मृतो यदि कथञ्चन॥
त्रिपुष्करे याम्यभे च कुलजान् मारयेद् ध्रुवम्।
तत्रानिष्टविनाशार्थं विधानं समुदीर्यते।
दाहदेशं शवं नीत्वा स्नापयेच्च प्रयत्नतः।
दर्भाणां प्रेतसखः कार्या पञ्चोर्णासूत्रवेष्टिताः॥
यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत्।
प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः॥
प्रेतहर्त्ता पञ्चमस्तु नामान्येतानि च क्रमात्।

सूतकान्ते ततः पुत्रः कुर्याच्छान्तिकपौष्टिकम् ॥

काँस्यपात्रस्थितं तैलं वीक्ष्य दद्याद् द्विजन्मने।

ब्रह्म-विष्णु-महेशेन्द्र-वरुण-प्रीतये ततः॥

माष-मुद्ग-यव-व्रीहि-प्रियंग्वादीन् प्रयच्छतु ।

स्वर्णदानं रुद्रजाप्यं लक्षहोमो द्विजार्चनम्॥

गोभूदानं षडंशेन कुर्याद्दोषोपशान्तये ॥ इति

अथ पञ्चकमरणप्रयोगः

कर्ता सव्येन पूर्वाभिमुखः कुशतिलजलान्यादाय –

**अद्येहेत्यादि (अमुक) गोत्रस्य (अमुक) प्रेतस्य धनिष्ठादिपञ्चकमरणविधिं करिष्ये** ।

इति सङ्कल्पय गन्धमाल्याद्यैः पञ्च प्रतिमा अलङ्कृत्य ऊर्णासूत्रेण संवेष्टच यवपिष्टेनानुलिप्य दाहसमये प्रेतोपरि न्यसेत्। तत्र क्रमः – प्रेतवाहप्रतिमां शिरसि। प्रेतसखप्रतिमां नेत्रयोः। प्रेतपप्रतिमां बाहुकुक्षौ। प्रेतभूमिपप्रतिमां नाभौ। प्रेतहर्तृप्रतिमां पादयोः।

ताभ्यो नाममन्त्रैर्घृताहुतीर्हुत्वोदकधारां दत्त्वा –

**यमाय सोमं मधुमत्तयेषां तेनो गावः स्वदन्तु हव्या** ।

**दूतं वो देवः स्वदयं मुमेषातेनोरासं तमुरुमा यमद्ययूयं यातः स्वस्तिभिः सप्त नः** ॥

**त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम्** ।

**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्** ॥

इति मन्त्राभ्यां प्रतिमासु प्रत्येकं घृताहुतीर्जुहुयात्।

॥ इति पञ्चकमरणदाहविधिविशेषः॥

# मासिकश्राद्धविधिः

गोमयोपलिप्तायां भूमौ दीपं प्रज्वाल्य कर्ता शुचिराचान्तः प्राङ्मुख उपविश्य प्रायश्चित्तगोदानं कुर्यात् । **ॐ ब्राह्मणाय नमः** इति ब्राह्मणं त्रिः सम्पूज्य गोदानं कृत्वा दीपं सम्पूज्य ब्राह्मणं निमन्त्रयेत्।

## १. ब्राह्मणनिमन्त्रणम्

हस्ते ताम्बूलगन्धाक्षतपुष्पाणि गृहीत्वा निमन्त्रयेत् –

**ॐ अद्येह (अमुक) सगोत्रस्याऽस्मत्पितुः (अमुक) शर्मणोऽद्य कर्तव्य(अमुक)मासिकश्राद्धे अनेन ताम्बूलगन्धपुष्पाक्षतेन त्वं मया निमन्त्रितः ।**

**ॐ निमन्त्रितोऽस्मि** इति प्रतिवचनम्।

प्रार्थना –

**ॐ अक्रोधनैः शौचपरैः सततं ब्रह्मवादिभिः ।**
**भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ॥**
**सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।**
**भवितव्यं भवद्भिर्नोऽद्यतने श्राद्धकर्मणि** ॥ इति ।

## २. पादार्घः

ब्राह्मणचरणौ प्रक्षालयेत् –

**ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**
**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ॥**
**यत्फलं कपिलादाने कार्तिक्यां ज्येष्ठपुष्करे ।**
**तत्फलं पाण्डव श्रेष्ठ विप्राणां पादशौचने ॥**

ततः पाद्यपात्रं वामहस्ते कृत्वा मोटकादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्रास्मत्पितः (अमुक) शर्मन्नेष पादार्घस्ते स्वधा ।**

सव्येनाऽऽचम्य गृहं प्रवेशयेत्। अपसव्येन प्रार्थयेत् –

**ॐ आगता यूयम्** । **ॐ सुस्वागता वयम्** । **ॐ इदमासनमास्यताम्** ।

**ॐ आस्यते** इति प्रतिवचनम् ।

ब्राह्मणमुदङ्मुखमुपवेशयेत्।

३. कर्मपात्रनिर्माणम्

**ॐ कर्मपात्रमहं करिष्ये । ॐ कुरुष्व** प्रतिवचनम्।

**ॐ यद्देवा देवहेडनम्** इति कण्डिकात्रयेण देवानावाह्य **ॐ शन्नोदेवीः** इति जलम्। **ॐ पवित्रेस्थः** इति कुशान्। **ॐ गन्धद्वाराम्** इति चन्दनम्। **ॐ अक्षन्नमीमदन्त** इत्यक्षताः। **ॐ तिलोसि** इति तिलान् क्षिपेत्। सव्येन कुशत्रयसहितं कर्मपात्रोदकमादाय –

**ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।**

**यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥ ॐ पुण्डरीकाक्षः पुनातु-३**

इति श्राद्धदेशं द्रव्याण्यात्मानं च सिञ्चेत्। तत्कुशादिकमादाय प्रतिज्ञां कुर्यात्–

४. प्रतिज्ञासङ्कल्पः

**ॐ अद्येत्यादिपूर्वसङ्कल्पसिद्धिरस्तु (अमुक) मासिकसान्नोदककुम्भोपस्थितिस्वर्गताऽश्वमेधयज्ञ-जन्यसमफलप्राप्तिकामः (अमुक) सगोत्रस्यास्मत्पितुः (अमुक) शर्मणः सान्नोदक-कुम्भोत्सर्गान्नसङ्कल्पादिकम् (अमुक) मासिकश्राद्धमेभिर्द्रव्यैरहं करिष्ये ।**

ततः प्रार्थना –

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥** इति त्रिः

५. आसनम्

अपसव्यं कृत्वा दक्षिणाभिमुखो भूत्वा सान्नोदकमुम्भमग्रतः कृत्वा कुशादीन्यादाय –

**ॐ अद्येह (अमुक) सगोत्रस्यास्मत्पितुः (अमुक) शर्मणो (अमुक) मासिकश्राद्धे इदमासनं तुभ्यं स्वधा।** इति कुम्भासनसमीपे समुत्सृजेत्।

६. ब्राह्मणपूजा

गन्धपुष्पाक्षतधूपदीपनैवेद्यद्रव्यवस्त्रादिभिः ब्राह्मणं कुम्भं च सम्पूज्य मोटकादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्रास्मत्पितः (अमुक) शर्मन् एतानि गन्धपुष्पाक्षतधूपदीपनैवेद्य-ताम्बूलवस्त्रद्रव्यपूगीफलयज्ञोपवीतादीनि तुभ्यं स्वधा।** इति कुम्भसमीपे समुत्सृजेत्।

### ७. ब्राह्मणाय तिलकम्

ब्राह्मणाय तिलकं कुर्यात् –

**ॐ गन्धद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**

### ८. कुम्भदानम्

ततो मोटकादिकमादाय सान्नोदककुम्भं स्पृशेत् –

**ॐ अद्येह (अमुक) सगोत्राय अस्मत्पित्रे (अमुक) शर्मणे अयं सान्नोदककुम्भस्तुभ्यं स्वधा ।**

इति ब्राह्मणकरे कुम्भमुत्सृजेत् ।

### ९. भूस्वामी

तिलघृतमधुजलयुतमन्नं मोटकादिसहितमादाय –

**ॐ इदमन्नं सजलमेतद्भूस्वामिपितृभ्यो नमः** । इत्युत्सृजेत्

### १०. अन्नसङ्कल्पः

सोपस्करं तिलघृतयुतमन्नमुपनीय मधुनाभिघार्य अधोमुखाभ्यां व्यस्ताभ्यां पाणिभ्याम् अन्नपात्रमालभेत् –

**ॐ पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृतेऽअमृतं जुहोमि स्वाहा ।**

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाᳬसुरे स्वाहा ॥**

ततस्तिलानन्नोपरि विकिरेत् – **ॐ अपहताऽअसुरा रक्षाᳬसि व्वेदिषदः ।**

क्रमेणान्नजलघृतादिषु विप्रदक्षिणाङ्गुष्ठं निवेश्य –

**ॐ इदमन्नम्,** इति अन्ने । **ॐ इमा आपः,** इति जले । **ॐ इदमाज्यम्,** इति घृते । **ॐ इदं हविः,** इति पुनरन्ने । **एतान्युपकरणानि** ।

मोटकादीन्यादाय दक्षिणहस्तेन विप्रदक्षिणाङ्गुष्ठं समादाय वामहस्ताङ्गुलिभिः क्रमेणान्नमपश्च स्पृष्ट्वा –

**ॐ अद्येह (अमुक) सगोत्राय अस्मत्पित्रे (अमुक) शर्मणे इदमन्नं सजलं सोपस्करं परिविष्टं परिवेक्ष्यमाणम् अक्षय्यतृप्तिहेतोस्ते स्वधा** । इत्यन्नमुत्सृजेत्

**ॐ अन्नसङ्कल्पसिद्धिरस्तु, भवान् प्राशयतु** ।

इति अपोशानं दत्त्वा सव्येनाञ्जलिं बध्वा प्रार्थयेत् –

**ॐ सप्तव्याधादशार्णेषु मृगाः कालञ्जरे गिरौ ।**

**चक्रवाकाः सरद्वीपे हंसाः सरसि मानसे ॥**

**तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।**

**प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ॥**

**ॐ मधुव्वाताऽऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥**

**मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः । मधुद्यौरस्तुनः पिता ।**

**मधुमान्नोवनस्पतिर्म्मधुमाँऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ ॐ मधु-३ ।**

**अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।**

**तत्सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः ॥**

**नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ।**

**नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥**

ततोऽपसव्येन ब्राह्मणकरे जलपुष्पतण्डुलान् क्रमेण दद्यात् –

**ॐ शिवा आपः सन्तु** इति जलम्,

**ॐ सौमनस्यमस्तु** इति पुष्पम्,

**ॐ अक्षतं चारिष्टमस्तु** इति तण्डुलान् ।

सव्येन पूर्वाभिमुखो भूत्वा प्रार्थयेत् –

**ॐ अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ।**

**ब्राह्मणस्य करे न्यस्ता शिवा आपो भवन्तु मे ॥**

**लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ।**

**लक्ष्मीर्वसति गोष्ठेषु सौमनस्यं ददातु मे ॥**

**अक्षतञ्चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिस्तथा ।**

**यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥**

## ११. कर्मपात्रोदकसेचनम्

कर्मपात्रोदकं कुशैर्गृहीत्वा प्रतिमन्त्रं स्वशिरस्यभिषिञ्चेत् –

**ॐ अस्मत्कुले दीर्घमायुरस्तु । ॐ शान्तिरस्तु । ॐ पुष्टिरस्तु । ॐ वृद्धिरस्तु ।**

**ॐ यच्छ्रेयस्तदस्तु । ॐ यत्पापं तत्प्रतिहतमस्तु** इति भूमौ ।

**ॐ द्विपदे चतुष्पदेभ्यः शान्तिर्भवतु** इति शिरसि ।

१२. तिलककरणम्

ब्राह्मणहस्तेन तिलकं कुर्यात् – **ॐ यं कामं कामयते सोऽस्मै कामः समृद्धचताम्** ।

१३. दक्षिणादानम्

तिलकुशयवजलद्रव्यमादाय –

**ॐ अद्येह (अमुक) सगोत्रस्यास्मत्पितुः (अमुक) शर्मणः कृतैतत् सान्नोदककुम्भोत्सर्गान्नसङ्कल्पादिकरूपम् (अमुक) मासिकश्राद्धप्रतिष्ठासाङ्गतासिध्यर्थमिमां दक्षिणां रजतं चन्द्रदैवतं (प्रचलितं द्रव्यं ....दैवतं वा) यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं सम्प्रददे । ॐ स्वस्ति** इति प्रतिवचनम् ।

ततोऽपसव्येन दीपाच्छादनं विधाय सव्येन हस्तौ पादौ प्रक्षाल्याऽऽचम्य प्रार्थयेत् –

**ॐ यत्कृतं तत्सुकृतमस्तु यन्न कृतं तद्विष्णोः प्रसादाद् ब्राह्मणवचनात्सर्वं परिपूर्णमस्तु** ॥

**ॐ अस्तु परिपूर्णम्** इति प्रतिवचनम् ।

१४. विष्णोः स्मरणम् कर्मसमर्पणञ्च

**ॐ प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च** ।

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः** ॥

ततः विष्णुस्मरणम् । ब्राह्मणविसर्जनम् ।

**ॐ कायेन वाचा मनसेन्द्रियैर्वा बुद्धचात्मना वा प्रकृतिस्वभावात्** ॥

**करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पये तत्** ॥

ततो मन्त्राशिषं गृहीत्वा ब्राह्मणान् भोजयेत् ।

॥ इति सङ्क्षेपेण मासिकश्राद्धविधिः ॥

# अस्थिक्षेपविधिः

प्रेतस्थाने बलिं दत्त्वा क्षीरेणाभ्युक्ष्य वाग्यतः।

प्रेतस्यास्थीनि गृह्णीयात् प्रधानाङ्गोद्भवानि च ॥१॥

पञ्चगव्येन संस्नाप्य क्षौमवस्त्रेण वेष्टयेत्।

प्रक्षिप्य मृण्मये भाण्डे नवे साच्छादने शुभे ॥२॥

अरण्ये वृक्षमूले वा शुद्धे संस्थापयेदथ।

सूक्ष्मान्यस्थीनि तद्भस्म नीत्वा तोये विनिःक्षिपेत् ॥३॥

ततः सम्मार्जनं भूमौ कर्तव्यं गोमयाम्बुभिः।

पूजां च पुष्पधूपाद्यैर्बलिभिः पूर्ववच्चरेत् ॥४॥

तत्स्थानाच्छनकैर्नीत्वा तीर्थे वा जाह्नवीजले।

कश्चिच्च प्रक्षिपेत् पुत्रो दौहित्रो वा सहोदरः ॥५॥

मातुः कुलं पितृकुलं वर्जयित्वा नराधमम्।

अस्थीन्यन्यकुलस्थस्य नीत्वा चान्द्रायणं चरेत् ॥६॥

गङ्गातोयेषु यस्यास्थि क्षिप्यते शुभकर्मणः।

न तस्य पुनरावृत्तिर्ब्रह्मलोकात् सनातनात् ॥७॥

अस्तङ्गते गुरौ शुक्रे तथा मासे मलिम्लुचे।

गङ्गायां मरणं यादृक् तादृक् फलमवाप्नुयात् ॥९॥

सवेष्ठनास्थिसमुच्चययुतं ताम्रसम्पुटमादाय तीर्थं गच्छेदिति ।

तत्र नियमाः –

मूत्रपुरीषोत्सर्गकाले आचमनकाले च नास्थीनि धारयेत्। शूद्रजातिकान् न स्पृशेदिति।

### अस्थिक्षेपप्रयोगः

ततस्तीर्थं प्राप्य तीर्थप्राप्तिनिमित्तकं स्नानादिकं विधायास्थीनि स्नापयित्वा सङ्कल्पयेत् –

**अद्येह (अमुक) गोत्रस्य (अमुक) शर्मणो ब्रह्मलोकादिप्राप्तये (अमुक) तीर्थेऽस्थिप्रक्षेपमहं करिष्ये ।**

इति सङ्कल्प्य पलाशपर्णपुटे पञ्चगव्येनास्थीन्यासिच्य हिरण्यशकलमाल्यघृत- तिलमिश्रितास्थीनि मृत्पिण्डे

निधाय दक्षिणां दिशमवेक्षमाणो **नमोऽस्तु धर्माय** इति वदन् तीर्थे प्रविश्य नाभिमात्रजले स्थित्वा **स मे प्रीतोऽस्तु** इति तीर्थे क्षिपेत्।

ततः स्नात्वा जलाद् बहिरागत्य सूर्यं दृष्ट्वा हरिं संस्मृत्य विप्राय यथाशक्ति रजतं दक्षिणां दद्यात्। तत्र सङ्कल्पः –

**अद्येह (अमुक) गोत्रस्य (अमुक) शर्मणोऽस्यास्थिक्षेपकृतस्तत्साङ्गतासिद्ध्यर्थं रजतमिदं तुभ्यमहं सम्प्रददे।**

॥ इत्यस्थिक्षेपप्रकारः॥

## आवश्यक सामग्रीहरू

**एघारौँ दिनका लागि –**

पञ्चगव्य, दियो, बत्ती, गोबर, कमेरो, सर्स्यूं, सेतो वस्त्र, कुश, तिल, पक्वान्न, नैवेद्य, तसला, चामल, दाउरा, जनै सुपारी ३२, सीधा २९, सुवर्ण प्रतिमा १०, गोल्फु ३६०, दतिवन ३६०, पानको पात, कुशका ब्राह्मण १९, पवित्र १८, कर्मपात्र, दुध, दही, घिउ, मह, सक्खर आदि।

शय्या- खाट, झुल, गुन्द्री, सत्रन्जी, डसना तकिया, दोलाई (सिरक) चादर, तन्ना आदि।

ब्राह्मण परिधान- धोती, कमिज, कोट, टोपी गम्छा(रुमाल), औंठी, जुत्ता, छाता,लट्ठी आदि।

ब्राह्मणी- धोती, चोलो, पछ्यौरा, सिँगार-सिन्दूर, टीका, गाजल, चूरा, गहना, छाता, जुत्ता आदि।

खाद्य १ वर्षका लागि वा यथाशक्ति- चामल, दाल, तरकारी, घिउ, तेल, मसला, चीनी, पकाउने भाँडा ३, डाडु, पनिउँ, चिम्टा, सनेसो, लोहोटा, थाल, कचौरा, गिलास, रिकापी, चुलो, गाग्रो, कोपरा, आरी, पीरा। पूजाभाँडा माला (तुलसी वा रुद्राक्ष) लालटीन, कुर्सी, बेंच, वाहन, फल, खाने मसला, पान सुपारी।

सुवर्ण पुरुष- सुवर्णमूर्ति १, सुवर्णप्रतिमा ६, एक कुरेत तार सुवर्णको १ र चाँदीको २ ब्रंह्माको चाँदीको प्रतिमा, रुद्रको ताम्र प्रतिमा, यमको लौह प्रतिमा।

वृषोत्सर्ग- हवन सामग्री, काँचो माटाको पाला, चामलको पिठो, दुध, खिर, बाछो, बाछी, चक्र, त्रिशूल, सुनको सिङ र टीका, चाँदीको खुर, तामाको करङ, काँसको कलचौडो, वस्त्र, भेटी, दक्षिणा आदि।

**बाह्रौँ दिनका लागि –**

पूजा सामग्री, पञ्चगव्य, चामल ६ चारकुने, दीयो, बत्ती, धूप, पवित्र, कुश, जनै, मोटक, सीधा ७, दूना, टपरी, पक्वान्न, नैवेद्य, गाइको दुध, दही, घिउ, मह, गुड वा चिनी, सुपारी, पानको पात, आसनी, कर्मपात्र २, कमेरो, सर्स्यूं , पञ्चपात्र २ आचमनी २, पिण्ड (प्रेत १, पितृ ३, विकिर १. वस्त्र, तपेस, धागो, एकोद्दिष्ट श्राद्धको सरजाम, गणेशपूजा, ब्राह्मण भोजन, भेटी, दक्षिणा आदि।

एकोद्दिष्ट- पूजा सामग्री, तर्पण सामग्री, कर्मपात्र, आसनी, पञ्चपात्र, दीयो, जौ, तिल, कुश, मोटक,

पवित्र, मालभोग केरा, चामल (पिण्ड पकाउने), चामल २ टपरी, दूध, दही, घिउ, मह, गुड वा चिनी, पञ्चामृत, पानको पात, कुशको ब्राह्मण, औँठी, सीधा २, जनै ३।

शुद्धशान्ति- पूजा सामग्री, हवन सामग्री,पञ्चगव्य (गहुँत १, गोबर १, दूध १४, दही ४, घिउ २.), पञ्चामृत, पञ्चपल्लव, सेतो वस्त्र, रुद्री/पितृसूक्त पाठको सरजाम, ब्राह्मण भोजन, भेटी, दक्षिणा आदि।

पददान- छाता, जुत्ता, वस्त्र, औठी, कमण्डलु, आसनी, पञ्चपात्र, लठ्ठी, ताम्रपात्र, आमान्न (सीधा), भोजन सामग्री, द्रव्य, यज्ञोपवीत आदि।

## शब्दार्थाः

| | | |
|---|---|---|
| आब्दिकम् | = | वार्षिक, वर्ष दिन |
| ऊन | = | घटी, कम्ता |
| वत्सरम् | = | वर्ष |
| अनले | = | आगामा |
| प्रत्यब्दम् | = | बर्सैपिच्छे, प्रतिवर्ष |
| अपकृष्य | = | खिचेर |
| उदकम् | = | पानी, जल |
| उल्मुकम् | = | राँको, अगुल्टो |
| उत्तानता | = | उत्ताने, उत्तानोपन |
| न्युब्जता | = | घोप्टो पार्नु, घोप्टोपन |
| विप्रनिवेशनम् | = | ब्राह्मणको घरमा |
| शवरी | = | रात्रि |
| श्मश्रु | = | दाह्री, जुँघा |
| अभ्यञ्जनम् | = | गाजल |
| कृतान्तः | = | यमराज |
| नियोजये | = | लगााउँछु, खटाउँछु |
| श्वः | = | भोलि |
| अभिमन्त्रणम् | = | निम्तो, आह्वान |
| आयासः | = | प्रयास, कसरत |
| रजनी | = | रात्रि |
| अभ्यङ्ग्य | = | लगाएर |
| उद्वर्तनम् | = | वुकुवा |
| गौरः | = | गोरो, सेतो |
| उपलिप्य | = | लिपेर, लगाएर |
| अभ्युक्ष्य | = | सिञ्चन गरेर |
| नूतनम् | = | नयाँ, नवीन |
| मृण्मयभाण्डे | = | माटाको भाँडोमा |
| सोपस्करम् | = | सामान सहित |
| वारिणा | = | जलले |
| काञ्चनम् | = | सुन |
| वासः | = | कपडा |
| वत्सतरी | = | वाछी |
| उत्सर्गः | = | छोड्नु |
| अवेक्षणम् | = | हेर्नु, देख्नु |
| गोमयेन | = | गोवरले |
| उपलिप्ते | = | लिपिएको |
| प्रागुदक्प्रवणे | = | पूर्वोत्तर फैलिएको |
| हस्तमात्राम् | = | एकहात प्रमाणको |
| चतुरस्रभूमिम् | = | चार कुना मिलेको भूमि |
| परिसमूह्य | = | बढारेर, सफा गरेर |
| प्रादेशमात्रम् | = | एक कुरेत प्रमाणको |
| उल्लिख्य | = | रेखा कोरेर |
| रजः | = | धुलो |
| उद्धृत्य | = | निकालेर, झिकेर |
| स्तरणम् | = | फैलाउनु, ओछ्याउनु |
| सकृल्लूनाम् | = | अलिकति काटिएका वा एकपटक मात्र काटिएका |
| बर्हिषाम् | = | कुशहरूको |
| अपास्य | = | हटाएर |
| निरूप्य | = | राखेर वा हेरेर |
| अपद्रव्यम् | = | अनावश्यक पदार्थ, हवन गर्न अयोग्य |
| सम्मार्जनम् | = | धुनु, पखाल्नु, सेचन गर्नु, |
| विमोकः | = | त्याग्नु, छोड्नु |

| | | |
|---|---|---|
| हायनम् | = | वर्ष |
| लोहितः | = | रातो |
| पाण्डुरः | = | छिर्के मिर्के, पाण्डुर वर्ण |
| विषाणः | = | सिङ |
| ईरयन् | = | भन्दै, जप्तै |
| अयसा | = | फलामले |
| लोहाकारम् | = | लोहकार लाई, फलामको काम गर्नेलाई |
| आहूय | = | बोलाएर |
| अङ्कय | = | चिह्नित गराऊ, चिह्न लगाऊ |
| उत्सर्जनम् | = | छोड्नु, त्याग गर्नु |
| अभिमतम् | = | इच्छामाफिकको, इच्छाइएबमोजिमको |
| नोपयुञ्जीत | = | उपयोग न गरोस्, न चलाओस् |
| बहुसर्पिष्कम् | = | धेरै घिउ भएको |
| पातव्यम् | = | पिउन योग्य, पिउनु |
| शृङ्गाग्रेण | = | सिङका टुप्पाले |
| उल्लिखेत् | = | खोस्रोस्, कोरोस् |
| दर्पितः | = | हुँङ्कारपूर्वक, गर्जंदै |
| बाहयः | = | बोकाउनु |
| क्षीरम् | = | दुध |
| स्पर्द्धते | = | प्रतिस्पर्धा गर्दछ |
| प्रवालः | = | मुगा, नयाँ अङ्कुर, वीणाको नाल |
| लाङ्गूलम् | = | पुच्छर |
| आतपः | = | घाम, सूर्यकिरण |
| कण्टकः | = | काँडो |
| अर्कः | = | सूर्य |
| शिविका | = | पालकी, डोली |
| व्यञ्जनम् | = | पङ्खा |
| दक्षिणप्लवाम् | = | दक्षिणतिर नुहेको वा होचो |
| चतुरङ्गुलोच्छ्रितम् | = | चार अङ्गुल अग्लो |
| उच्छिष्टम् | = | बाँकी रहेको वा जूठो |
| कपित्थः | = | कथ |
| अनुव्रजनम् | = | पछि लाग्नु,पछ्याउनु |
| अञ्जनम् | = | गाजल |
| कङ्कतिका | = | काँइयो |
| विमत्सरः | = | इर्ष्या वा डाहरहित |
| अर्वाक् | = | अगाडि, पहिले नै |
| वपनम् | = | मुण्डन गर्नु |
| निरूप्य | = | निर्माण गरेर, बनाएर |
| अवशिष्टम् | = | बाँकी रहेको, वचेको |
| अस्थि | = | हाड |
| क्षीरम् | = | दुध |
| क्षौमवस्त्रम् | = | रेसमी कपडा, सूक्ष्म वस्त्र |
| वेष्टनम् | = | ढाक्नु, बेर्नु, लगाउनु |
| अम्बुः | = | पानी, जल |
| दौहित्रः | = | छोरीको छोरो, नाती |
| अन्यकुलस्थस्य | = | मातृपितृकुल वाहेक अरुको |
| नीत्वा | = | लगेर |
| चान्द्रायणम् | = | चान्द्रायण व्रत |
| चरेत् | = | गरोस् |
| मलिम्लुचे मासे | = | मलमासमा |
| गुरौ | = | बृहस्पति र |
| शुक्रे | = | शुक्र |
| अस्तङ्गते | = | अस्ताएको वेलामा |
| मज्जति | = | डुब्दछ |
| ताम्रसम्पुटम् | = | तावाकोपात्रमा |
| मूत्रम् | = | पिसाव |
| पुरीषम् | = | दिसा, विष्ठा |
| उत्सर्गकाले | = | गरेको समयमा, छाडेको वखतमा |
| पलाशपूर्ण पुटे | = | पलाशको पातमा वा दुनामा |
| शकलम् | = | टुक्रा |
| दक्षिणां दिशम् | = | दक्षिण दिशातर्फ |
| अवेक्षमाणः | = | हेर्दै |
| प्रक्षिपेत् | = | फ्याँकोस्। |

# अभ्यासः

**१. शब्दार्थमुल्लिख्य वाक्येषु प्रयोजयत**

श्मश्रु । गौरमृत्तिका । वत्सतरी । लोहः । रक्षोघ्नः । शिबिका । सान्नोदकम् ।

**२. पाठ्यांशमनुसृत्य रिक्तस्थानं पूरयत**

(क) पतिपुत्रवती ......................... यदि ।

.................................... पयस्विनीम् ॥

(ख) अक्रोधनैः ................................. ।

...................................... कारिणा ॥

(ग) उपानहौ ............................... ।

सर्वस्थानेषु ................... प्रयच्छतः ॥

(घ) देवताभ्यः ............................ ।

................ स्वधायै ............ ॥

**३. कोष्ठस्थं सर्वोपयुक्तं पदमवचित्य वाक्यपूर्णो विधेयः**

(क) कुम्भदानं ....... क्रियते । (दशाहे, एकादशाहे, द्वादशाहे, त्रयोदशाहे)

(ख) प्रेतसन्तरणार्थं .......क्रियते । (अश्वदानम्, लौहपुरुषदानम्, गुडदानम्)

(ग) शिबिकाया देवता ......... । (उत्तानाङ्गिरा, यमः, विश्वकर्मा, त्वष्टा)

(घ) सपिण्डनं ...... भवति । (दशाहे, एकादशाहे, द्वादशाहे, त्रयोदशाहे)

(ङ) सपिण्डनश्राद्धे .... पिण्डा भवन्ति । (त्रयः, चत्वारः, पञ्च, षट्)

(च) पिण्डो ...... विभज्यते । (सुवर्णशलाकया, ताम्रशलाकया, रजतशलाकया)

**४. अधस्तनप्रश्नानामुत्तरं देयम्**

(क) वत्सतरीवृषभाभिमन्त्रणप्रकारः कः ?

(ख) काञ्चनपुरुषदानविधिं वर्णयत ।

(ग) कानि षोडश श्राद्धानि ? तानि कदा सम्पादनीयानि ?

(घ) आद्यमासिकमाद्याब्दिकञ्च कदा भवति सप्रमाणं प्रदर्शनीयम्।

(ङ) कुम्भदानविधिः प्रतिपादनीयः।

(च) उत्तमवृषभस्य लक्षणं किम् ? सप्रमाणं लिखत।

(छ) आद्यमासिकश्राद्धविधिं निर्दिशत।

(ज) प्रेतश्राद्धे कतिपदार्थाः विवर्जनीयाः भवन्ति ?

(झ) एकादशाहे सोपस्करशय्यादानस्य सङ्कल्पवाक्यं विरचयत।

(ञ) सधवायाः प्रेतत्वे वृषोत्सर्गो विधेयो वा न ? इति सप्रमाणं लेखनीयम्।

(ट) वृषभस्य पार्श्वे लेखनीयानि चिह्नानि कानि ?

(ठ) वृषभस्य दक्षिणकर्णे पठनीयो मन्त्रः प्रदर्शनीयः।

(ड) अयस्काराय कति वेतनं दातव्यम् इति विलिख्य कपिलादानसङ्कल्पवाक्यं विलेखनीयम्।

(ढ) हस्तार्घपात्रस्थजलमभिमन्त्रणमन्त्रः पूरणीयः।

(ण) आद्यमासिकश्राद्धे पिण्डदानवाक्यं लिखत।

(त) अर्घपात्रे स्थापनीयानि द्रव्याणि कानि ? तेषां मन्त्रप्रतीकाँश्च प्रदर्शयत।

(थ) आद्याब्दिकश्राद्धे अक्षय्योदकदानवाक्यं प्रदर्श्य विष्णुस्मरणमन्त्रः प्रदर्शनीयः।

(द) सपिण्डीकरणं कदा कार्यम् ? कार्येऽस्मिन् कस्याधिकारः सप्रमाणं विवेचनीयम्।

(ध) प्रेतार्घजलविभाजनप्रकारः सम्मेलनमन्त्राश्च प्रदर्शनीयाः।

(न) कैः पदार्थैः पिण्डविभागः कर्तव्यः ? कैश्च सह सम्मेलनीयः ?

(प) पिण्डमेलनानन्तरं पठनीयो मन्त्रः कः ? तं पूरणीयम्।

(फ) सपिण्डोत्तरपाथेयश्राद्धं कदा केन विधिना भवति।

(ब) धनिष्ठादिपञ्चकमरणविधौ कर्तव्यानि कार्याणि प्रदर्शनीयानि।

(भ) मासिकश्राद्धे अन्नदानसङ्कल्पवाक्यं विरचयत।

(म) अस्थिक्षेपविधिः कः कुत्र गत्वा कथं क्षेपणीयम्।

(य) अस्तङ्गते गुरौ शुक्रे तथा मलिम्लुचे मासि च गङ्गायामस्थिक्षेपं भवति न वा ?

(र) कति पददानसामग्र्यः ? कानि च तेषां नामानि।

(ल) सपिण्डनश्राद्धस्य पिण्डमेलनप्रकारं वर्णयत।

**प्रयोगात्मकः**

शिक्षकस्य निर्देशनमनुसृत्य सपिण्डनश्राद्धस्याभ्यासो विधेयः।

# पार्वणश्राद्धम्

## तत्रादौ तर्पणविधिः

### (क) प्रथमं प्रायश्चित्तगोदानम्

कर्ता शुचिरासने उपविश्याऽऽचम्य गां ब्राह्मणं च सम्पूज्य गोपुच्छोदकेन स्वशिरसि अभिषिञ्चेत् –

**ॐ मनो मे तर्पयत वाचम्मे तर्पयत प्राणम्मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रम्मे तर्पयतात्मानम्मे तर्पयत प्रजाम्मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन् ।**

ततः कुशतिलजलान्यादाय सङ्कल्पं कुर्यात् –

**हरि ॐ तत्सत् ३ ॐ विष्णुः ३ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य-**

**(अमुक) गोत्रः (अमुक) प्रवरः शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनीयवाजसनेयशाखाध्यायी (अमुक) शर्माहं/वर्माहं/गुप्तोऽहं कायिक-वाचिक-मानसिक-सांसर्गिक-ज्ञाताज्ञात-सकलपापक्षयपूर्वकं श्रीमत्परमेश्वरप्रीत्यर्थम्, (अमुक) सगोत्राणाम् अस्मत्पितृपितामहप्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां तथा (अमुक) सगोत्राणाम् अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां अद्यकर्तव्यमहालयापरपक्षान्तर्गत-पार्वणश्राद्धकर्तृत्वाधिकारसिद्धये अद्यदिनात्प्राक्कर्तव्यनियमाकरण-भक्ष्याभक्ष्य-स्पृश्यास्पृश्य-चोष्या-चोष्यादि-सकलप्रत्यवाय-परिहारार्थम् इमां सर्वप्रायाश्चित्तप्राजापत्यानुकल्पीभूतां गां रुद्रदैवतां तत्प्रत्याम्नायीभूतं द्रव्यं (अमुक) दैवतं (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय प्रायश्चित्तगोदानत्वेन तुभ्यमहं सम्प्रददे । ॐ स्वस्ति इति प्रतिवचनम् ॥**

प्रार्थना –

**ॐ कपिले सर्वदेवानां पूजनीयासि रोहिणि ।**
**तीर्थदेवमयी यस्मात्तस्माच्छान्तिं प्रयच्छ मे ॥**
**गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ।**
**गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥**

ततो दानप्रतिष्ठा –

**ॐ अद्यकृतैतत् सर्वप्रायश्चित्तनिमित्तकगोदानकर्मणः (गोप्रत्याम्नायीभूतद्रव्यदानकर्मणो वा) प्रतिष्ठासाङ्गतासिद्ध्यर्थम् इदं दानप्रतिष्ठाद्रव्यं रौप्यखण्डं चन्द्रदैवतं (प्रचलितं द्रव्यं .....दैवतं वा) (अमुक) गोत्राय (अमुक) शर्मणे सुपूजिताय ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे ।**

**ॐ कोदात् कस्माऽअदात्** इति प्रतिग्रहीता वदेत्।

## (ख) प्रतिज्ञासङ्कल्पः

कुशतिलजलान्यादाय सङ्कल्पं कुर्यात् –

**हरि ॐ तत्सत् ३ ॐ विष्णुः ३ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य-**

**(अमुक) गोत्रः (अमुक) प्रवरः (अमुक) वेदशाखाध्यायी (अमुक) शर्माहं/वर्माहं/गुप्तोऽहं (अमुक) सगोत्राणाम् अस्मत्पितृपितामहप्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां तथा च (अमुक) सगोत्राणाम् अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धाङ्गत्वेन श्रीमत्परमेश्वर-प्रीतये देवर्षीणां मनुष्याणां दिव्यपितॄणां स्वपितॄणां च तर्पणमहं करिष्ये ॥**

## (ग) देवर्षितर्पणम्

उपवीती प्राङ्मुखः कुशपाणिर्देवतीर्थवर्तिना यवकुशोदकेन विश्वान् देवानावाह्य तर्पयेत्।

**ॐ विश्वेदेवासऽआगत शृणुतामऽइमꣳहवम् । एदं बर्हिर्निषीदत ॥**

**ॐ विश्वेदेवाः शृणुतेमꣳहवम्मे येऽअन्तरिक्षे यऽउपद्यविष्ठ ॥**

**येऽअग्निजिह्वाऽउतवा यजत्राऽआसद्यास्मिन् बर्हिषि मादयध्वम् ॥**

इति मन्त्रद्वयं पठित्वा –

**ॐ भूर्भुवःस्वः ब्रह्मादयो देवा ! इहागच्छन्तु, इह तिष्ठन्तु, गृह्णन्तु-एताञ्जलाञ्जलीन् ।**

| | | | |
|---|---|---|---|
| ॐ ब्रह्मा तृप्यताम्। | ॐ विष्णुस्तृ...। | ॐ रुद्रस्तृ...। | ॐ प्रजापतिस्तृ...। |
| ॐ देवास्तृप्यन्ताम्। | ॐ छन्दांसि तृ...। | ॐ वेदास्तृ...। | ॐ ऋषयस्तृ...॥ |
| ॐ पुराणाचार्यास्तृ...। | ॐ गन्धर्वास्तृ...। | ॐ इतराचार्यास्तृ...। | |
| ॐ संवत्सरसावयवस्तृप्यताम्। | ॐ देव्यस्तृप्यन्ताम्। | ॐ अप्सरसस्तृ.. । | |
| ॐ देवानुगास्तृ...। | ॐ नागास्तृ ...। | ॐ सागरास्तृ...। | ॐ पर्वतास्तृ...। |

ॐ सरितस्तृ... । ॐ मनुष्यास्तृ... । ॐ यक्षास्तृ... । ॐ रक्षांसि तृ... ।

ॐ पिशाचास्तृ... । ॐ सुपर्णास्तृ... । ॐ भूतानि तृ... । ॐ पशवस्तृ... ।

ॐ वनस्पतयस्तृ... । ॐ ओषधयस्तृ... । ॐ भूतग्रामचतुर्विधस्तृप्यताम् ।

ॐ मरीचिस्तृप्यताम् । ॐ अत्रिस्तृ... । ॐ अङ्गिरास्तृ ... । ॐ पुलस्त्यस्तृ...।

ॐ पुलहस्तृ... । ॐ क्रतुस्तृ... । ॐ प्रचेतास्तृ... । ॐ वसिष्ठस्तृ... ।

ॐ भृगुस्तृ... । ॐ नारदस्तृ... ।

॥ इति देवर्षितर्पणम् ॥

## (घ) मनुष्यतर्पणम्

ततः कण्ठे सूत्रं कृत्वा निवीती उदङ्मुखः कायतीर्थवर्तिना सकुशोदकेनाञ्जलौ तिरश्चः कुशान् कृत्वा मनुष्यान् द्विर्द्विस्तर्पयेत् –

**ॐ भूर्भुवःस्वः सनकादयः सप्तमनुष्या ! इहागच्छन्तु, हह तिष्ठन्तु, गृह्णन्तु-एताञ्जलाञ्जलीन् ।**

ॐ सनकस्तृप्यताम् २। ॐ सनन्दनस्तृ...२ । ॐ सनातनस्तृ...२। ॐ कपिलस्तृ...२। ॐ आसुरिस्तृ... २। ॐ वोढुस्तृ...२। ॐ पञ्चशिखस्तृ...२।

॥ इति मनुष्यतर्पणम् ॥

## (ङ) दिव्यपितृतर्पणम्

ततोऽपसव्येन प्राचीनावीती दक्षिणाभिमुखः पातितवामजानुर्मोटितकुशतिलाञ्जलित्रयेण
पितृतीर्थेन खड्गपात्रेण च दिव्यपितृनावाह्य तर्पयेत् ।

**ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि ।**

**उशन्नुशतऽआवह पितॄन् हविषेऽअत्तवे ॥**

**ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।**

**अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥**

इति मन्त्रद्वयं पठित्वा–

**ॐ कव्यवाडनलादयो दिव्यपितरः ! इहागच्छन्तु, इह तिष्ठन्तु, गृह्णन्तु-एताञ्जलाञ्जलीन् ।**
ॐ कव्यवाडनलस्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः ३। ॐ सोमस्तृ... ३। ॐ यमस्तृ... ३। ॐ अर्यमा तृ... ३। ॐ अग्निष्वात्तास्तृप्यन्तामिदं तिलोदकं तेभ्यः स्वधा नमः ३। ॐ सोमपास्तृ... ३। ॐ बर्हिषदस्तृ... ३। ॐ

यमाय नमः ३। ॐ धर्मराजाय नमः ३। ॐ मृत्यवे नमः ३। ॐ अन्तकाय नमः ३। ॐ वैवस्वताय नमः ३। ॐ कालाय नमः ३। ॐ सर्वभूतक्षयाय नमः ३। ॐ औदुम्बराय नमः ३। ॐ दध्नाय नमः ३। ॐ नीलाय नमः ३। ॐ परमेष्ठिने नमः ३। ॐ वृकोदराय नमः ३। ॐ चित्राय नमः ३। ॐ चित्रगुप्ताय नमः ३।

॥ इति दिव्यपितृतर्पणम् ॥

## (च) स्वपितृतर्पणम्

तत **आगच्छन्तु मे पितरः ! गृह्णन्त्वेताञ्जलाञ्जलीन्** इति स्वपितृनावाह्य तर्पयेत् –

**ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः ।**

**असुं यऽईयुरवृकाऽऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥**

ॐ अद्येह (अमुक) सगोत्रोऽस्मत्पिता (अमुक) शर्मा वसुस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा। इति प्रथमाञ्जलिं पित्रे दद्यात्।

**ॐ अङ्गिरसो नः पितरोनवग्वाऽअथर्वाणो भृगवः सोम्यासः ।**

**तेषां वयꣳसुमतौ यज्ञियानामपिभद्रे सौमनसे स्याम ॥**

अनेन मन्त्रेण पूर्ववद् द्वितीयाञ्जलिं पित्रे दद्यात् ।

**ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।**

**अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ।**

अनेन मन्त्रेण पूर्ववत् तृतीयाञ्जलिं पित्रे दद्यात् ।

**ॐ ऊर्जं वहन्तीरमृतङ्घृतम्पयः कीलालं परिस्रुतम् । स्वधास्थ तर्पयत मे पितृन् ।**

ॐ अद्येह (अमुक) सगोत्रोऽस्मत्पितामहः (अमुक) शर्मा रुद्रस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा। इति पितामहाय प्रथमाञ्जलिं दद्यात्।

**ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः । अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम् ॥**

अनेन मन्त्रेण पितामहाय पूर्ववद् द्वितीयाञ्जलिं दद्यात् ।

**ॐ ये चेह पितरो ये च नेह याँश्च विद्म याँ२ऽउ च न प्रविद्म ।**

**त्वँव्वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञꣳसुकृतञ्जुषस्व ॥**

अनेन मन्त्रेण पितामहाय पूर्ववत्तृतीयाञ्जलिं दद्यात् ।

**ॐ मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्न्नः सन्त्वोषधीः ॥**

ॐ अद्येह (अमुक) सगोत्रोऽस्मत् प्रपितामहः (अमुक) शर्मा आदित्यस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा। इति प्रपितामहाय प्रथमाञ्जलिं दद्यात्।

**ॐ मधु नक्तमुतोषसो मधुमत्पार्थिवꣳरजः। मधु द्यौरस्तु नः पिता॥**

अनेन मन्त्रेण प्रपितामहाय द्वितीयाञ्जलिं दद्यात्।

**ॐ मधुमान्नो वनस्पतिर्मधुमाँऽअस्तु सूर्यः। माध्वीर्गावो भवन्तु नः॥**

अनेन मन्त्रेण प्रपितामहाय पूर्ववत्तृतीयाञ्जलिं दद्यात्।

**ॐ आमा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे।**

**आ मा गन्तां पितरामातरा चामा सोमोऽअमृतत्त्वेन गम्यात्॥**

इति मन्त्रं पठित्वा –

ॐ अद्येह (अमुक) सगोत्राऽस्मन्माता (अमुक) देवी वसुस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा। इत्यञ्जलित्रयं दद्यात्।

ॐ अद्येह (अमुक) सगोत्राऽस्मत्पितामही (अमुक) देवी रुद्रस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा। इति त्रिः।

ॐ अद्येह (अमुक) सगोत्राऽस्मत्प्रपितामही (अमुक) देवी आदित्यस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा। इति त्रिः।

**ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मैतद्वः पितरो वासः।**

ॐ अद्येह (अमुक) सगोत्रोऽस्मन्मातामहः (अमुक) शर्मा वसुस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा। इति प्रथमाञ्जलिं मातामहाय दद्यात्।

एवं **ॐ नमो वः** इति मन्त्रेण द्वितीयतृतीयाञ्जली मातामहाय दद्यात्।

पुनः **ॐ नमो वः** इति मन्त्रं पठित्वा –

ॐ अद्येह (अमुक) सगोत्रोऽस्मत्प्रमातामहः (अमुक) शर्मा रुद्रस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा। इति प्रमातामहाय प्रथमद्वितीयतृतीयाञ्जलीन् दद्यात्।

पुनः **ॐ नमो वः** इति मन्त्रं पठित्वा –

ॐ अद्येह (अमुक) सगोत्रोऽस्मद्वृद्धप्रमातामहः (अमुक) शर्मा आदित्यस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा। इति वृद्धप्रमातामहाय प्रथमद्वितीयतृतीयाञ्जलीन् दद्यात्।

ॐ अद्येह (अमुक) सगोत्राऽस्मन्मातामही (अमुक) देवी वसुस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा। इति त्रिः।

ॐ अद्येह (अमुक) सगोत्राऽस्मत्प्रमातामही (अमुक) देवी रुद्रस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा। इति त्रिः।

ॐ अद्येह (अमुक) सगोत्राऽस्मद्वृद्धप्रमातामही (अमुक) देवी आदित्यस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा। इति त्रिः।

ततः श्लोकानुसारेण ज्येष्ठकनिष्ठादीन् सपत्नीकाँस्तर्पयेत् –

**तातामम्बात्रितयं सपत्नजननी मातामहादित्रयम् ।**

**सस्त्रि-स्त्री-तनयादि तातजननीस्वभ्रातरः सस्त्रियः ॥**

**तातम्बात्मभगिन्यपत्यधवयुग् जायापिता सद्गुरुः ।**

**शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥**

ततोऽखण्डजलधारया तर्पयेत् –

**ॐ आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।**

**तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥**

**पितृवंशे मृता ये च मातृवंशे तथैव च ।**

**गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥**

**ते तृप्तिमखिला यान्तु ये चास्मत्तोयकाङ्क्षिणः ।**

**ये बान्धवाबान्धवा येऽन्यजन्मनि बान्धवाः ॥**

**ते सर्वे तृप्तिमायान्तु मद्दत्तेनाम्बुनाखिलाः ।**

**देवासुरास्तथा यक्षा नागा गन्धर्वराक्षसाः ॥**

**पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ।**

**जलेचरा भूमिचरा वाय्वाहाराश्च जन्तवः ॥**

**ते तृप्तिमखिला यान्तु मद्दत्तेनाम्बुनाखिलाः ।**

**नरकेषु समस्तेषु यातनासु च ये स्थिताः ॥**

**तेषामाप्यायनायैतद्दीयते सलिलं मया ।**

**अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ॥**

**आब्रह्मभुवनाँल्लोकानिदमस्तु तिलोदकम् ।**

**यत्र क्वचनसंस्थानां क्षुत्तृष्णोपहतात्मनाम् ॥**

**इदमक्षय्यमेवास्तु मया दत्तं तिलोदकम् ॥**

## (छ) वस्त्रनिष्पीडनम्

**ॐ ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः।**

**ते पिबन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥**

ततः सव्यं कृत्वाऽऽचामेत्।

## (ज) ब्रह्मादिदेवानां पूजनम्

पूर्वाभिमुखो भूत्वा जले षट्कोणं विलिख्य ब्रह्मादीन् पूजयेत् –

**ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेनऽआवः।**

**सबुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥**

ॐ ब्रह्मणे नमः।

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्यपाꣳसुरे स्वाहा ॥**

ॐ विष्णवे नमः।

**ॐ नमस्ते रुद्रमन्यवऽउतोतऽइषवे नमः। बाहुभ्यामुत ते नमः ॥**

ॐ रुद्राय नमः।

**ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ॥**

ॐ सवित्रे नमः।

**ॐ मित्रस्य चर्षणी धृतो वो देवस्य सानसि। द्युम्नं चित्रश्रवस्तमम्।**

ॐ मित्राय नमः।

**ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद ॥**

ॐ वरुणाय नमः।

## (झ) सूर्यार्घ्यदानम्

**ॐ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते।**

**अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर ॥**

## (ञ) सूर्योपस्थानम्

**ॐ अदृश्रमस्य केतवो विरश्मयो जनाँ२ऽअनु । भ्राजन्तोऽअग्नयो यथा ।**

**उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय ॥**

**सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वन्देवेष्वसि भ्राजिष्ठोऽहं मनुष्येषु भूयासम् ॥**

**ॐ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।**

**नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजाऽऋतं बृहत् ॥**

## (ट) दिशां दिग्देवानाञ्च प्रणमनम्

प्रदक्षिणीकृत्य दिशः दिग्देवताश्च प्रणमेत् ।

ॐ प्राच्यै दिशे नमः । ॐ इन्द्राय नमः । ॐ आग्नेय्यै दिशे नमः । ॐ अग्नये नमः । ॐ दक्षिणायै दिशे नमः । ॐ यमाय नमः । ॐ नैर्ऋत्यै दिशे नमः । ॐ निर्ऋतये नमः । ॐ प्रतीच्यै दिशे नमः । ॐ वरुणाय नमः । ॐ वायव्यै दिशे नमः । ॐ वायवे नमः । ॐ उदीच्यै दिशे नमः । ॐ कुबेराय नमः । ॐ ऐशान्यै दिशे नमः । ॐ ईशानाय नमः । ॐ ऊर्ध्वायै दिशे नमः। ॐ ब्रह्मणे नमः। ॐ अधोदिशे नमः। ॐ अनन्ताय नमः।

तत उपविश्य नमेत् –

ॐ ब्रह्मणे नमः । ॐ अग्नये नमः । ॐ पृथिव्यै नमः । ॐ ओषधीभ्यो नमः । ॐ वाचे नमः । ॐ वाचस्पतये नमः । ॐ विष्णवे नमः । ॐ महद्भ्यो नमः । ॐ अद्भ्यो नमः। ॐ अपां पतये नमः। ॐ वरुणाय नमः।

## (ठ) मुखाभिमर्शनम्

**ॐ संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳशिवेन ।**

**त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥**

इति मन्त्रेण मुखमभिमृश्य अनामिकाङ्गुष्ठाभ्यां जलं स्पृष्ट्वा चक्षुःस्पर्शः कार्यः ।

## (ड) चक्षुःस्पर्शः

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ॥**

## (ढ) पितृविसर्जनम्

**ॐ देवागातुविदो गातुं वित्त्वा गातुमित । मनसस्पतऽइमन्देव यज्ञꣳस्वाहा वातेधाः ॥**

इति मन्त्रेण पितृन् विसर्जयेत् ।

॥ इति तर्पणविधिः ॥

### शब्दार्थाः

| | | |
|---|---|---|
| दिग्बन्धनम् | = | सबै दिशाहरूमा तिल छरेर श्राद्धमा विघ्नबाधा गर्नेहरूलाई हटाउनु (दिशाहरू बाँध्नु) । |
| नीविबन्धनम् | = | मोटक लगेर कम्मरमा बाँध्नु । |
| देवतीर्थः | = | औँलाको टुप्पो । |
| कायतीर्थः | = | कान्छी औँलाको फेद । |
| पितृतीर्थः | = | बुढीऔँला र चोरी औँलाको बिच । |
| tातत्रितयम् | = | बाबु, बाजे, बराजु तीन पुस्ता । |
| अम्बात्रितयम् | = | आमा, बज्यै, बुढी बज्यै तीन पुस्ता । |
| तातजननीस्वभ्रातरः | = | काका, मामा र दाजुभाइ । |
| ताताम्बात्मभगिन्यपत्यधवयुक् | = | सन्तान र पतिले सहित भएका फुपू, सानिमा, ठूलीआमा र दिदीबहिनी । |
| पादार्घः | = | ब्राह्मणको पाउ धुने अर्घपात्र । |
| हस्तार्घः | = | ब्राह्मणको हात धुने अर्घपात्र । |
| विकिरदानम् | = | संस्कार नभई मरेका जुठो पूरा खाने डढेर अगति परेर मरेकाहरूलाई दिने भाग । |
| भूस्वामी | = | भूमिपतिलाई दिइने अन्नको भाग (सिधा) । |
| वसन्तादिपूजा | = | पिण्ड उठाइसकेपछि पिण्डमा गरिने ऋतुस्वरूप पितृहरूको पूजा । |

# अभ्यासः

**प्रश्नाः**

१. 'विश्वेदेवासऽआगत' इति प्रतीकात्मकं मन्त्रं पूरयत ।

२. सप्तमनुष्याः के ? तेषां नामानि क्रमेण लिखत ।

३. सूर्यार्घ्यदानमन्त्रः कः ?

४. वस्त्रनिष्पीडनमन्त्रं लिखत ।

५. प्रायश्चित्तगोदानप्रयोगं प्रदर्शयत ।

६. तर्पणार्हाः पितरः के ? तर्पणक्रमश्च कः ? सुस्पष्टं लिखत ।

७. दीपपूजनमन्त्रः कः ?

८. ब्राह्मणनिमन्त्रणप्रकारः प्रदर्शनीयः ।

९. कर्मपात्रे प्रक्षेपणीयानि वस्तूनि कानि ? सर्वमुल्लिख्य मन्त्रप्रतीकानि च लेख्यानि ।

१०. ब्राह्मणपूजायाः सङ्कल्पवाक्यं विलेखनीयम् ।

११. विकिरासनविकिरदानमन्त्रौ पूरणीयौ ।

१२. पिण्डिकासेचनमन्त्रः कः ?

१३. 'अमीमदन्त पितरो यथाभागमा वृषायिषत' कुत्र अस्य मन्त्रस्य विनियोगः ? ग्रन्थाधारेण स्पष्टीकरणीयः ।

१४. अक्षय्योदकदानसङ्कल्पवाक्यं प्रदर्शनीयम् ।

१५. वसन्तपूजामन्त्रो लेख्यः ।

१६. ब्राह्मणविसर्जनविधिः प्रदर्शनीयः ।

१७. पद्धत्यनुसारेण हस्तार्घपात्रविधिः प्रदर्शनीयः ।

## अथ पार्वणश्राद्धविधिनिर्णयः

श्राद्धकालः–

पूर्वाह्णे आमश्राद्धं तु एकोद्दिष्टं च मध्यतः ।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ॥ – हारीतः
गृह्याग्निशिशुदेवानां ब्रह्मचारितपस्विनाम् ।
तावन्न दीयते किञ्चिद्यावत् पिण्डान्न निर्वपेत् ॥ – हेमाद्रिः

सङ्कल्पे विभक्तिः –

अक्षय्यासनयोः षष्ठी द्वितीयावाहने तथा ।
अन्नदाने चतुर्थी स्याच्छेषाः सम्बुद्धयः स्मृताः ॥

पाककर्तृविचारः –

रजस्वलां च पाखण्डां पुंश्चलीं पतितां तथा ।
त्यजेच्छूद्रां तथा बन्ध्यां विधवां चान्यगोत्रजाम् ॥

पात्रविचारः –

न कदाचित् पचेदन्नमयः स्थालीषु पैतृकम् ।
अयसो दर्शनादेव पितरो विद्रवन्ति हि ॥
एवं शस्त्रादीन्यपि पितृसन्निधौ न स्थापयेत् ।

श्राद्धभूमिः –

गोगजाश्वादिजुष्टेषु कृत्रिमायां तथा भुवि ।
न कुर्याच्छ्राद्धमेतेषु पारक्यादिषु भूमिषु ॥

भारते वर्ज्यविप्राः –

कितवो ब्रह्महा यक्ष्मी पशुपालो निराकृतिः ।
ग्रामप्रेष्यो वार्धुषिको गायकः सर्वविक्रयी ॥

पार्वणे विश्वेदेवविचारः –

पुरूरवा माद्रवाश्च पार्वणे समुदाहृतौ ।
(येषामेतन्न ज्ञानं तैः)

आगच्छन्तु महाभागा विश्वदेवा महाबलाः ।

ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥ इत्ययं श्लोक उच्चारणीयः

सम्बन्धं प्रथमं ब्रूयाद् गोत्रं नाम तथैव च ।

पश्चाद्रूपं विजानीयात् क्रम एष सनातन ॥

सकारेण तु वक्रव्यं गोत्रं सर्वत्र धीमता ।

सकारः कुतपो ज्ञेयस्तस्माद्यत्नेन तं वदेत् ॥

अन्नाभावे द्विजाभावे यद्येको ब्राह्मणो भवेत् ।

पात्राण्यासादयेत् त्रीणि न तु ब्राह्मणसंख्यया ॥ – इति मनुः

छन्दोगा जुहुयुः सव्येनापसव्येन याजुषाः । – इति वृद्धयाज्ञवल्क्योक्तेः ।

भूस्वामी –

परकीयगृहे यस्तु स्वान् पितॄन् तर्पयेद्यदि ।

तद् भुवःस्वामिनस्तस्य हरन्ति पितरो बलात् ॥

अग्रभागं ततस्तेभ्यो दद्यात् मूल्यं च जीवनम् ॥ इत्युक्तेः

पिण्डभेदनादिविचारः –

श्वशृगालखरैः स्पृष्टः पिण्डो भिन्नः प्रमादतः ।

कर्तुरायुष्यनाशाय प्रेतस्तं नोपसर्पति ॥

तद्दोषपरिहारार्थं प्राजापत्यं प्रकल्पयेत् ॥

श्राद्धे पुष्पविचारः –

केतकीं तुलसीपत्रं बिल्वपत्रं च वर्जयेत् ।

द्रोणं च करवीरं च धत्तूरं किंशुकं तथा ॥

इति पृथ्वीचन्द्रोदयवचनाद् यद्यपि तुलसी न प्राप्ता, तथापि –

तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः ।

प्रयान्ति गरुडारूढास्तत्पदं चक्रपाणिनः ॥

इति पृथ्वीचन्द्रोदयवचनात् पिण्डेषु निवेदनं भवति, न ब्राह्मणार्चनेषु इति विशेषः ।

श्राद्धे प्रशस्ताः –

मध्याह्नं खड्गपात्रं च तथा नेपालकम्बलः ।

रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टम स्मृतः ।

पार्वणश्राद्धेऽपराह्णः कालः प्रशस्तः ॥

अथ पार्वणश्राद्धोपयोगी किञ्चिल्लिख्यते –

भाद्रशुक्लपौर्णमास्यां प्रपितामहात् पराँस्त्रीनुद्दिश्य श्राद्धं कार्यम्,

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।

पौर्णमास्यान्तु कर्तव्यं वाराहवचनं तथा ॥ – इति हेमाद्रिवचनात् ॥

पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम् ।

वर्जयित्वा प्रौष्ठपदीं तथा दर्शस्तथैव सा ॥ – इति गार्ग्यवचनात् ॥

कन्यागते सवितरि यान्यहानि तु षोडश ।

क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत् ॥ – इति ब्रह्माण्डवचनात् ॥

यः कन्यकान्वितः पक्षः सोऽत्यन्तं पुण्यमुच्यते ॥ – इति कात्यायनवचनात् ॥

मध्ये वा यदि वाप्यन्ते यत्र कन्यां व्रजेद्रविः ।

स पक्षः सकलः श्रेष्ठः श्राद्धषोडशकं प्रति ॥

इति वृद्धमनुवचनाच्च षोडशदिनं श्राद्धकालः । पार्वणे षोडशत्वं भाद्रपूर्णिमया सहेत्येकपक्षः आश्विन कृष्णप्रतिपदेति द्वितीयः, तिथिवृद्ध्या तृतीयः, नाद्यः पूर्णिमायां प्रपितामहात्परानुद्दिश्य नान्दीश्राद्धविधानेन तस्य पितृश्राद्धे नाङ्गत्वं नान्त्योऽपि यत्र पक्षे द्वितिथ्योर्वृद्धिस्तत्र सप्तदशदिन प्रसङ्गेनैकस्मिन् श्राद्धानापत्तेः, न च प्रतिपदा षोडशत्वे तिथिवृद्धौ षोडशत्वहानिः । वृद्धेस्तस्मिन्नहन्येवान्तर्भावात् । न च तद्भवतः सम्भवति तिथिवृद्ध्या षोडशत्वमिति व्याघातात् । अवशिष्यते द्वितीयः पक्षः ।

अतः अह्नः षोडशकं यत्तु शुक्लप्रतिपदा सह । – इति देवलवचनात् ।

आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः ।

काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम् ॥ – इति वृद्धमनुवचनाच्च ।

अत एव पौर्णमास्यां श्राद्धं न तदङ्गमिति पूर्वोक्तमपि सङ्गतं भवतीति दिक् ॥

काशिकाकारस्तु, सूत, ब्रह्माण्डपुराणम्, पुराणसमुच्चयः, वृद्धयाज्ञवल्क्यः, वायुपुराणवचनानुदाहृत्य पौर्णमास्या सह षोडशत्वं प्रतिपादितवान् । विधवा पार्वणं ब्राह्मणद्वारा कुर्यात् । विधवा कारयेत् श्राद्धं यथाकालमतन्द्रिता । इति स्मृतिसङ्ग्रहात् स्वयं सङ्कल्पय विधवा कारयेत् श्राद्धं पार्वणमिति प्रयोगपरिजातस्यार्थिकवचनाच्च ॥

पार्वणे गौणः कालः –

महालयश्राद्धस्य षोडशदिने करणासम्भवे कार्तिकदर्शे कार्यम् ।

येयं दीपान्विता राजन् ख्याता पञ्चदशी तिथिः ।

तस्यां दद्याददत्तं चेत् पितृभ्यो वै महालये ॥ – इति भविष्यवचनात् ॥

तत्राप्यसम्भवे वृश्चिकसङ्क्रान्तेः प्रागेव कर्तव्यमिति प्रमाणमाकरे द्रष्टव्यम् ॥

## अथ पार्वणश्राद्धविधिः

कर्ता शुचिराचान्तः गोमयोपलिप्ते प्राङ्गणे दीपं प्रज्वाल्याऽऽचम्य प्रत्यङ्मुखः प्रथमं विश्वेदेवब्राह्मणौ निमन्त्रयेत्।

### १. ब्राह्मणनिमन्त्रणम्

स्ववामपाणिना विप्रदक्षिणजानु स्पृष्ट्वा स्वदक्षिणजानु च पातयित्वा स्वदक्षिणहस्तेन अधोमुखेन ताम्बूलादिकं विप्रहस्ते दत्त्वा –

**ॐ अद्येत्यादि (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां विश्वेषां देवानां[४४] पुरूरवार्द्रवनाम्नाम् अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे अनेन ताम्बूलगन्धपुष्पाक्षतेन त्वं मया निमन्त्रितः।**

**ॐ निमन्त्रितोऽस्मि** इति प्रतिवचनम्।

पुनस्तत्सर्वं पूर्ववद् विधाय –

**ॐ अद्येत्यादि (अमुक) सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां विश्वेषां देवानां[४५] पुरूरवार्द्रवनाम्नाम् अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे अनेन ताम्बूलगन्धपुष्पाक्षतेन त्वं मया निमन्त्रितः।**

**ॐ निमन्त्रितोऽस्मि** इति प्रतिवचनम्।

ततोऽपसव्यं कृत्वा दक्षिणाभिमुखो भूत्वा स्ववामजानु पातयित्वा वामहस्तेन उदङ्मुखस्य पितृब्राह्मणस्य वामजानु स्पृष्ट्वा उत्तानेन स्वदक्षिणकरेण ताम्बूलादिकं विप्रहस्ते दत्त्वा –

**ॐ अद्येत्यादि (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे अनेन ताम्बूलगन्धपुष्पाक्षतेन त्वं मया निमन्त्रितः॥**

**ॐ निमन्त्रितोऽस्मि** इति प्रतिवचनम्।

पुनः पूर्ववत् –

**ॐ अद्येह (अमुक)सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्तव्य-महालयापरपक्षान्तर्गतपार्वणश्राद्धे अनेन ताम्बूलगन्धपुष्पाक्षतेन**

४४. अत्र केचन माद्रवा इति पठन्ति।

४५. अत्र केचन माद्रवा इति पठन्ति।

**त्वं मया निमन्त्रितः ।**

**ॐ निमन्त्रितोऽस्मि** इति प्रतिवचनम् ।

**ॐ अक्रोधनैः शौचपरैः सततं ब्रह्मवादिभिः ॥**

**भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ॥१॥**

**सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।**

**भवितव्यं भवद्भिर्नोऽद्यतने श्राद्धकर्मणि ॥२॥**

**ॐ भवितव्यम्** इति प्रतिवचनम् ।

## २. पादार्घः

सव्येन विश्वेदेवब्राह्मणयोश्चरणान् प्रक्षालयेत् –

**ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**

**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ॥**

**ॐ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।**

**जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥**

पाद्यपात्रं वामहस्ते कृत्वा **ॐ शन्नोदेवी**रिति मन्त्रं पठित्वा कुशादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवार्द्रवनामानः एष पादार्घो वः स्वाहा ।**

पुनः पूर्ववत् कृत्वा कुशादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवार्द्रवनामानः एष पादार्घो वः स्वाहा ।**

ततोऽपसव्येन पितृब्राह्मणयोश्चरणान् प्रक्षालयेत् –

**ॐ नमोऽस्त्वनन्ताय०** इति ।

**ॐ यत्फलं कपिलादाने कार्तिक्यां ज्येष्ठपुष्करे ।**

**तत्फलं पाण्डवश्रेष्ठ ! विप्राणां पादशौचने ॥**

ततः पाद्यपात्रं वामहस्ते कृत्वा **ॐ शन्नोदेवी**रिति मन्त्रं पठित्वा मोटकमादाय –

**ॐ अद्येह (अमुक) सगोत्राः अस्मत्पितृ-पितामह-प्रपितामहाः (अमुकामुकामुक) शर्माणः सपत्नीका वसुरुद्रादित्यस्वरूपा अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे एषपादार्घस्त्रेधा विभज्य युष्मभ्यं स्वधा ।**

पुनः पूर्ववत् कृत्वा मोटकमादाय –

**ॐ अद्येह (अमुक) सगोत्राः अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहाः (अमुकामुकामुक) शर्माणः सपत्नीका वसुरुद्रादित्यस्वरूपा अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे एष पादार्घस्त्रेधा विभज्य युष्मभ्यं स्वधा ।**

## ३. ब्राह्मणानां गृहप्रवेशनम्

सव्येनाऽऽचम्य विश्वदेवब्राह्मणौ गृहं प्रवेशयेत् –

**ॐ आगता यूयम्** । **ॐ सुस्वागता वयम्** । **ॐ इदमासनमास्यताम्** ।

**ॐ आस्यते** इति प्रतिवचनम् । **ॐ भूर्भुवः स्वः** इति मन्त्रेण विश्वदेवब्राह्मणौ पूर्वाभिमुखौ उपवेशयेत् ।

ततोऽपसव्येन – **ॐ आगता यूयम्** । **ॐ सुस्वागता वयम्** । **ॐ इदमासनमास्यताम्** ।

**ॐ आस्यते** इति प्रतिवचनम् । **ॐ भूर्भुवः स्वः** इति मन्त्रेण पितृब्राह्मणौ उदङ्मुखौ उपवेशयेत् । सर्वत्र प्रश्नेषु पङ्क्तिमूर्धन्यं पृच्छेत् ।

## ४. कर्मपात्रनिर्माणम्

सव्येन **ॐ कर्मपात्रमहं करिष्ये, ॐ कुरुष्व** इत्यनुज्ञातः सन्,

**ॐ यद्देवा देवहेडनम्** इति मन्त्रत्रयेण देवकर्मपात्रे देवानावाहयेत् –

**ॐ यद्देवा देवहेडनं देवासश्चकृमा व्वयम्** ।
**अग्निर्म्मा तस्मादेनसो विश्वान्मुञ्चत्वँहसः** ॥
**ॐ यदि दिवा यदि नक्तमेनाँसि च कृमा व्वयम्** ।
**वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वँहसः** ॥
**ॐ यदि जाग्रद्यदि स्वप्नमेनाँसि च कृमा व्वयम्** ।
**सूर्य्योमा तस्मादेनसो विश्वान्मुञ्चत्वँहसः** ॥

इत्यावाह्य तत्र पवित्रजलपुष्पादीन् क्षिपेत् -

**ॐ पवित्रेस्थः** इति मन्त्रेण पवित्रम् । **ॐ शन्नोदेवीः** इति मन्त्रेण जलम् ।

**ॐ श्रीश्चते** इति मन्त्रेण पुष्पम् । **ॐ यवोसि** इति मन्त्रेण यवान् ।

**ॐ गन्धद्वाराम्** इति चन्दनम् ।

ततः अपसव्यं कृत्वा **ॐ कर्मपात्रमहं करिष्ये** । **ॐ कुरुष्व** इत्यनुज्ञातः सन्,

**ॐ यद्देवा देवहेडनम्** इति मन्त्रत्रयेण पितृकर्मपात्रे देवानावाह्य तत्र,

**ॐ पवित्रेस्थः** इति मन्त्रेण पवित्राणि। **ॐ शन्नोदेवीः** इति मन्त्रेण जलम्।

**ॐ श्रीश्चते** इति मन्त्रेण पुष्पम्। **ॐ तिलोसि** इति मन्त्रेण तिलान्।

**ॐ गन्धद्वाराम्** इति चन्दनं क्षिपेत् ।

ततः सव्येन कुशत्रयसहितं कर्मपात्रोदकमादाय –

**ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।**

**यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ ॐ पुण्डरीकाक्षः पुनातु-३**

इत्युक्त्वा श्राद्धदेशे द्रव्याण्यात्मानं च सिञ्चेत् ।

## ५. प्रतिज्ञासङ्कल्पः

तत्कुशादिकमादाय प्रतिज्ञां कुर्यात् –

**ॐ अद्येत्यादि (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां तथा (अमुक) सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां पुरूरवार्द्रवनाम्नां विश्वेदेवपूर्वकाणाम् अद्यकर्त्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धम् एभिर्द्रव्यैरहं करिष्ये ।**

ततः प्रार्थना –

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥** इति त्रिः

**ॐ सप्त व्याधा दशार्णेषु मृगाः कालाञ्जरे गिरौ ।**

**चक्रवाकाः सरद्वीपे हंसाः सरसि मानसे ॥१॥**

**तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।**

**प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ॥२॥**

**ये विप्रमुख्याः कुरुजाङ्गलेषु जातास्तथा दासकुले मृगाश्च ।**

**कालाञ्जरे सप्त च चक्रवाका ये मानसे ते वयमत्र सिद्धाः ॥३॥**

**पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ॥**

**यत्र यत्र स्मरेद् विद्वान् पितॄणां दत्तमक्षयम् ॥४॥**

**श्राद्धभूमौ गयां ध्यात्वा तथा देवं गदाधरम् ।**

**उभाभ्यां च नमस्कृत्य ततः श्राद्धं समारभेत् ॥५॥**

**गयागयो गयादित्यो गायत्री च गदाधरः ।**

**गया गयासुरश्चैव षड्गया मुक्तिदायकाः ॥६॥**

**ईशानविष्णुकमलासनकार्तिकेय-वह्नित्रयार्करजनीशगणेश्वराणाम् ।**

**क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां पादान्नमामि सततं पितृमुक्तिहेतोः ॥७॥**

**ॐ गयायै नमः । ॐ गदाधराय नमः** इति च पठेत् ।

## ६. दिग्बन्धनम्

अपसव्येन दिग्बन्धनं कुर्यात् । तत्र तिलसहितमोटकमादाय तिलान् पूर्वादिक्रमेण वक्ष्यमाणमन्त्रैर्विकिरेत् –

पूर्वे – **ॐ अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ।**

**अपहताऽअसुरा रक्षाᳪसि व्वेदिषदः ॥**

दक्षिणे – **ॐ तथा बर्हिषदः पान्तु याम्यां ये पितरः स्थिताः ।**

**अपहताऽअसुरा रक्षाᳪसि व्वेदिषदः ॥**

पश्चिमे – **ॐ प्रतीचीमाज्यपास्तद्वत् । अपहताऽअसुरा रक्षाᳪसि व्वेदिषदः ॥**

उत्तरे – **ॐ उदीचीमपि सोमपाः । अपहताऽअसुरा रक्षाᳪसि व्वेदिषदः ॥**

ऊर्ध्वमधश्च – **ॐ उद्ध्र्वतस्त्वर्यमा रक्षेत्कव्यवाडनलोऽप्यधः ।**

सर्वतः – **ॐ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ।**

**सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ॥**

ततस्तन्मोटकं कट्यां धारयेत् –

## ७. नीविबन्धनम्

**ॐ निहन्मि सर्वं यदमेध्यवद्भवेद्धताश्च सर्वेऽसुरदानवा मया ।**

**रक्षांसि यक्षाः सपिशाचगुह्यका हता मया यातुधानाश्च सर्वे ॥**

## ८. भूतोत्सादनम्

ततस्तिलसहितं कुशखण्डत्रयं गृहीत्वा दक्षिणस्यां क्षिपेत् –

**ॐ प्रयान्तु दूरतः सर्वे दैत्येया दानवास्तथा ।**

**सर्वविघ्नोपशान्त्यर्थं क्षिपामि च कुशाँस्तिलान् ॥**

## ९. विष्णोः स्मरणम्

सव्येन रक्षार्थं विष्णुस्मरणम् –

**ॐ नमो नमस्ते गोविन्द पुराणपुरुषोत्तम ।**

**इदं श्राद्धं हृषीकेश रक्षतां सर्वतो दिशः ॥**

## १०. आसनम्

सव्येनैव कुशमादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां विश्वेषां देवानां पुरूरवार्द्रवनाम्नामिदं कौशमासनं वः स्वाहा ।**

पुनः कुशमादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां विश्वेषां देवानां पुरूरवार्द्रव-नाम्नामिदं कौशमासनं वः स्वाहा ।**

इति देवब्राह्मणाभ्यां कुशरूपमासनं दद्यात् ।

ततोऽपसव्यं कृत्वा मोटकमादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे इदं मोटकरूपमासनं त्रेधा विभज्य युष्मभ्यं स्वधा ।**

पुनर्मोटकमादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे इदं मोटकरूपमासनं त्रेधा विभज्य युष्मभ्यं स्वधा ।**

इति पितृब्राह्मणाभ्यां मोटकरूपमासनं दद्यात् ।

## ११. आवाहनम्

सव्येन अञ्जलिं बद्ध्वा विश्वान् देवानावाहयेत् ।

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां तथा (अमुक) सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वान् देवान् पुरूरवार्द्रव नाम्नः आवाहयिष्ये ।**

**ॐ आवाहय** इति प्रतिवचनम् ।

**ॐ विश्वेदेवासऽआगत शृणुतामऽइमꣳहवम् । एदं बर्हिर्निषीदत ॥**

इति मन्त्रेणाऽऽवाह्य श्राद्धदेशे यवान् विकिरेत् – **ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीः ॥**

ततः पठेत् –

**ॐ विश्वेदेवाः शृणुतेमꣳहवम्मे येऽअन्तरिक्षे यऽउपद्यविष्ठ ।**

**येऽअग्निजिह्वाऽउत वा यजत्राऽआसद्यास्मिन्बर्हिषि मादयध्वम् ॥**

**ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।**

**ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥** इति

ततोऽपसव्येनाञ्जलिं बद्ध्वा पितॄनावाहयेत् –

**ॐ अद्येह (अमुक) सगोत्रान् अस्मत्पितृ-पितामह-प्रपितामहान् (अमुकामुकामुक) शर्मणः सपत्नीकान् वसुरुद्रादित्यस्वरूपान् तथा (अमुक) सगोत्रान् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहान् (अमुकामुकामुक) शर्मणः सपत्नीकान् वसुरुद्रादित्यस्वरूपान् अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे आवाहयिष्ये ।**

**ॐ आवाहय** इति प्रतिवचनम् ।

**ॐ उशन्तस्त्वा निधीमह्यु शन्तः समिधीमहि । उशन्नुशतऽआवह पितॄन्हविषेऽअत्तवे ॥**

इति मन्त्रेणावाह्य श्राद्धदेशे तिलान् विकिरेत् – **ॐ अपहताऽअसुरा रक्षाꣳसि व्वेदिषदः ।**

ततः पठेत् –

**ॐ आयन्तु नः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः ।**

**अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥** इति

## १२. हस्तार्घः

सव्येन विश्वेदेवब्राह्मणौ पृच्छेत् – **ॐ हस्तार्घपात्रमहं करिष्ये ।**

ॐ **कुरुष्व** इत्यनुज्ञातः सन् पुटकद्वयमग्रे कृत्वा तत्र पूर्वाग्रे द्वे पवित्रे धारयेत् –

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।**

ततस्तत्र –

ॐ **शन्नोदेवीः०** इति मन्त्रेण जलम् । ॐ **यवोसि०** इति मन्त्रेण यवान् । ॐ **श्रीश्चते लक्ष्मी०** इति मन्त्रेण पुष्पाणि । ॐ **गन्धद्वाराम्०** इति मन्त्रेण चन्दनं क्षिपेत् ।

ततो देवब्राह्मणं पृच्छेत् – ॐ **हस्तार्घपात्रं सम्पन्नम्** ।

ॐ **सुसम्पन्नम्,** इति तेनोक्ते पुनर्देवब्राह्मणं पृच्छेत् – ॐ **हस्तार्घपात्रम् उत्थापयामि** ।

ॐ **उत्थापयस्व,** इति वचनानन्तरम्,

हस्तार्घपात्रं वामहस्ते कृत्वा ॐ **नमो नारायणाय,** इति मन्त्रेण पुष्पसहितं पूर्वाग्रं पवित्रं विप्रकरे धृत्वाऽधोमुखेन दक्षिणकरेण वामकरस्थपुटकमुखं पिधाय तत्रस्थजलमभिमन्त्रयेत् –

**ॐ या दिव्या आपः पयसा सम्बभूवुर्याऽअन्तरिक्षाऽउत पार्थवीर्याः ।**

**हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः सर्ठ॑स्योनाः सुहवा भवन्तु ॥**

कुशयवजलान्यादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्तव्यमहालयापरक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवार्द्रवनामानः एष हस्तार्घो वः स्वाहा ॥**

इति देवब्राह्मणकरेऽर्घं दत्वा **अर्घे पुनः प्रत्यर्घमस्तु** इति सपुष्पं पवित्रमर्घपात्रे प्रत्यानीय पुष्पपवित्रसहितं तदर्घपात्रं भूमौ स्थापयेत् ।

ततोऽपरार्घपात्रं वामहस्ते कृत्वा सर्वं पूर्ववदेव विधाय यवजलकुशानादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवार्द्रवनामानः एष हस्तार्घो वः स्वाहा ।**

इति देवब्राह्मणकरे अर्घं दत्वा **अर्घे पुनः प्रत्यर्घमस्तु** इति पूर्ववत्कृत्वा तदर्घपात्रमपि भूमौ धृत्वाऽर्घपात्रद्वयस्थजलेन –

ॐ **तच्चक्षुरिति** मन्त्रेण चक्षुःस्पर्शः कार्यः । तदनन्तरं पवित्रसहिते देवार्घपात्रे –

ॐ **विश्वेभ्यो देवेभ्यः स्थानमसि,** इति वाक्येन स्वस्वविश्वेदेवदक्षिणपार्श्वे उत्ताने स्थापयेत् ।

ततोऽपसव्येन पितृब्राह्मणं पृच्छेत् – **हस्तार्घपात्राण्यहं करिष्ये** इति ।

**ॐ कुरुष्व-** इत्यनुज्ञातः सन् पित्रादिमातामहाद्यर्घपात्रार्थं स्वाग्रमेकमेकं पुटकं संस्थाप्य तयोः पुटकयोर्दक्षिणे द्वौ द्वौ पुटकौ निधाय तेषु पुटकेषु षट्सु उत्तराग्राणि पवित्राणि धारयेत् –

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।**

ततस्तत्र –

**ॐ शन्नोदेवीः०** इति मन्त्रेण जलम् । **ॐ तिलोसि०** इति मन्त्रेण तिलान् । **ॐ श्रीश्चते लक्ष्मी०** इति मन्त्रेण पुष्पाणि । **ॐ गन्धद्वाराम्०** इति मन्त्रेण चन्दनं क्षिपेत् ।

ततः पितृब्राह्मणं पृच्छेत् – **ॐ हस्तार्घपात्राणि सम्पन्नानि** इति ।

**ॐ सुसम्पन्नानि** इति तेनोक्ते पुनः पितृब्राह्मणं पृच्छेत् – **ॐ हस्तार्घपात्रम् उत्थापयामि ।**

**ॐ उत्थापयस्व,** इति वचनानन्तरम्,

प्रथमं पित्र्यर्घपात्रं दक्षिणेन हस्तेनाऽऽदाय वामे कृत्वा **ॐ नमो नारायणाय** इति मन्त्रेण सपुष्पं पवित्रं पितृतीर्थेन विप्रकरे धृत्वा वामकरस्थहस्तार्घपात्रमुखमुत्तानेन दक्षिणकरेण पिधाय तत्रस्थजलमभिमन्त्रयेत् –

**ॐ या दिव्या आपः पयसा सम्बभूवुर्याऽअन्तरिक्षाऽउत पार्थवीर्याः ।**

**हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः सꣳस्योनाः सुहवा भवन्तु ॥**

ततस्तिलजलमोटकमादाय –

**ॐअद्येह (अमुक) सगोत्र अस्मत्पितः (अमुक) शर्मन् सपत्नीक वसुस्वरूप अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे एष हस्तार्घस्ते स्वधा ।**

इति पितृब्राह्मणकरे दत्वा **अर्घे पुनः प्रत्यर्घमस्तु** इति सपुष्पं पवित्रमर्घपात्रे प्रत्यानीय पुष्पपवित्रसहितं तदर्घपात्रं भूमौ स्थापयेत् ।

एवं प्रकारेण यथाक्रमं पितामहादिभ्यः पञ्चभ्योऽर्घं दद्यात् ।

ततः प्रपितामहार्घपात्रस्थजलादिकं पितामहार्घपात्रे कृत्वा तत्सर्वं पित्रर्घपात्रे कृत्वा पित्रर्घपात्रमुत्तानं पितामहार्घपात्रोपरि धृत्वा तदुभयपात्रमुत्तानं प्रपितामहार्घपात्रोपरि कुर्यात् । एवमेव मातामहार्घपात्राण्यपि कृत्वा सव्येन तत्रस्थजलेन –

**ॐ तच्चक्षुरिति** मन्त्रेण चक्षुः स्पर्शः कार्यः ।

ततोऽपसव्येन एकत्रकृतं पित्रर्घपात्रं गृहीत्वा पितृद्विजस्याऽऽसनवामभागे –

**ॐ पितृभ्यः स्थानमसीति** न्युब्जं कुर्यात्, तदुपरि कुशत्रयं दद्यात् ।

एवमेकत्रकृतं मातामहाद्यर्घपात्रं गृहीत्वा मातामहद्विजस्याऽऽसन वामभागे –

**ॐ मातामहेभ्यः स्थानमसीति** न्युब्जं कुर्यात् । तदुपरि कुशत्रयं दद्यात् ।

## १३. अर्चनम् अर्पणञ्च

सव्येन देवब्राह्मणौ ब्रूयात् – **ॐ अर्चयिष्ये** ।

**ॐ अर्चय** इत्युक्ते गन्धपुष्पाक्षतताम्बूलयज्ञोपवीतवस्त्रादिभिः समभ्यर्च्य धूपदीपौ च कुर्यात् ।

ततः कुशादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवार्द्रवनामानः एतान्यर्चनानि अत्र गन्धपुष्पाक्षतधूपदीपनैवेद्यताम्बूलयज्ञोपवीतद्रव्यवासांसि वः स्वाहा ।** इत्युत्सृजेत् ।

पुनः कुशादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवार्द्रवनामानः एतान्यर्चनानि अत्र गन्धपुष्पाक्षतधूपदीपनैवेद्यताम्बूलयज्ञोपवीतद्रव्यवासांसि वः स्वाहा ।** इत्युत्सृजेत् ।

ततोऽपसव्येन पितृब्राह्मणौ पृच्छेत् – **ॐ अर्चयिष्ये** ।

**ॐ अर्चय** इत्युक्ते गन्धादिभिरभ्यर्च्य मोटकादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्रा अस्मत्पितृ-पितामह-प्रपितामहाः (अमुकामुकामुक) शर्माणः सपत्नीका वसुरुद्रादित्यस्वरूपा अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे एतान्यर्चनानि अत्र गन्धपुष्पाक्षतधूपदीपनैवेद्यताम्बूलयज्ञोपवीतद्रव्यवासांसि त्रेधा विभज्य युष्मभ्यं स्वधा ।**

पुनर्मोटकमादाय –

**ॐ अद्येह (अमुक) सगोत्रा अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहाः (अमुकामुकामुक) शर्माणः सपत्नीका वसुरुद्रादित्यस्वरूपा अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे एतान्यर्चनानि अत्र गन्धपुष्पाक्षतधूपदीपनैवेद्यताम्बूलयज्ञोपवीतद्रव्यवासांसि त्रेधा विभज्य युष्मभ्यं स्वधा ।**

ततः सव्येन विश्वेदेवब्राह्मणहस्तयोर्जलं दद्यात् – **ॐ अर्चनविधेः सर्वं परिपूर्णमस्तु,** इति । **ॐ अस्तु,** इति प्रतिवचनम् ।

अपसव्येन पितृब्राह्मणहस्तयोश्च जलं दद्यात् – **ॐ अर्चनविधेः सर्वं परिपूर्णमस्तु,** इति । **ॐ अस्तु,** इति प्रतिवचनम् ।

## १४. चतुष्कोणमण्डलनिर्माणम्

सव्येन दक्षिणावर्तेन देवब्राह्मणयोर्भोजनस्थाने चतुर्दिक्ष्वासनसहितं चतुष्कोणमण्डलं कुर्यात्[४६] –

**ॐ यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति ।**

**एवं मण्डलभस्मैतत् सर्वभूतानि रक्षतु ॥**

ततोऽपसव्येन पितृब्राह्मणयोर्भोजनस्थाने वामावर्तेन चतुर्दिक्ष्वासनसहितं चतुष्कोणमण्डलं पूर्वोक्तमन्त्रेण कुर्यात् ।

## १५. अग्नौकरणम्

अपसव्येनैवाग्नौकरणम् । दक्षिणाभिमुखः प्राचीनावीती पातितवामजानुः पुटकादौ सघृतमन्नं कृत्वा पितृब्राह्मणं पृच्छेत् – **ॐ अग्नौकरणमहं करिष्ये,** इति ।

**ॐ कुरुष्व** इत्यनुज्ञातः सन् पितृब्राह्मणकरे जलपात्रे वाऽऽहुतिद्वयं जुहुयात् –

**ॐ अग्नये कव्यवाहनाय स्वाहा, इदमग्नये कव्यवाहनाय ।**

**ॐ सोमाय पितृमते स्वाहा, इदं सोमाय पितृमते ।** इति

हुतशेषान्नं सव्येन विश्वेदेवब्राह्मणपात्रोपरि क्षिप्त्वाऽपसव्येन पितृब्राह्मणपात्रेषु च क्षिपेत् ।

## १६. भूस्वामी

अपसव्येनैव तिलघृतमधुजलयुतं मोटकादिसहितमन्नमादाय दक्षिणाभिमुखो भूत्वा –

**ॐ इदमन्नं सजलमेतद्भूस्वामिपितृभ्यो नमः,** इत्युत्सृजेत् ।

## १७. अन्नसङ्कल्पः

सव्येन विश्वान् देवान् ध्यायन् सोपस्करं यवजलयुतमन्नमुपनीय मधुनाऽभिघार्य ऋजुहस्ताभ्यामन्नपात्रमालभ्य पठेत् –

**ॐ पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽअमृतं जुहोमि स्वाहा ।**

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे ।**

**ॐ कृष्ण कव्यमिदं रक्ष मदीयम् ।** इति

---

४६= अत्र ब्राह्मणस्य चतुष्कोणं, क्षत्रियस्य त्रिकोणं, वैशस्य मण्डलं कार्यम् ।

ततो विप्रदक्षिणाङ्गुष्ठं गृहीत्वा – **ॐ इदमन्नम्** इत्यन्ने । **ॐ इमाआपः** इति जले । **ॐ इदमाज्यम्** इति घृते । **ॐ इदं हविः** इति पुनरन्ने । **ॐ एतान्युपकरणानि** इति क्रमेणान्नजलघृतेषु विप्रदक्षिणाङ्गुष्ठं निवेशयेत् ।

तदनन्तरम् **ॐ यवोसि** इति मन्त्रेण यवानन्नोपरि विकीर्य कुशयवजलान्यादाय वामहस्ताङ्गुल्यङ्गुष्ठैः क्रमेणान्नमपश्च स्पृष्ट्वा –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिभ्यो विश्वेभ्यो देवेभ्यः पुरूरवार्द्रवनामभ्य अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे इदमन्नं सजलं सोपस्करं परिविष्टं परिवेक्ष्यमाणमक्षय्यतृप्तिहेतोर्वः स्वाहा** । इति कुशादिकमुत्सृजेत् ।

श्राद्धान्नस्य च सङ्कल्पो भूमावेव प्रदीयते । हस्तेषु दीयमानं तत्पितृभ्यो नोपतिष्ठते ॥

पुनः सर्वं पूर्ववत् विधाय कुशादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिभ्यो विश्वेभ्यो देवेभ्यः पुरूरवार्द्रवनामभ्य अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे इदमन्नं सजलं सोपस्करं परिविष्टं परिवेक्ष्यमाणमक्षय्यतृप्तिहेतोर्वः स्वाहा** । इति कुशादिकमुत्सृजेत् ।

ततोऽपसव्येन सोपस्करं तिलजलयुतमन्नमुपनीय मधुनाभिघार्य अधोमुखाभ्यां व्यस्ताभ्यां पाणिभ्यामन्नपात्रमालभ्य पठेत् –

**ॐ पृथिवि ते पात्रं द्यौरपिधानम्०** इत्यादि स्वाहान्तं पठित्वा विप्रदक्षिणाङ्गुष्ठं गृहीत्वा –

**ॐ इदमन्नम्** इत्यन्ने । **ॐ इमाआपः** इति जले । **ॐ इदमाज्यम्** इति घृते । **ॐ इदं हविः** इति पुनरन्ने । **ॐ एतान्युपकरणानि** इति क्रमेणान्नजलघृतेषु विप्रदक्षिणाङ्गुष्ठं निवेशयेत् ।

तदनन्तरम् **ॐ अपहताऽ असुरा रक्षाꣳसि व्वेदिषदः,** इत्यन्नोपरि तिलान् विकीर्य मोटकादीन्यादाय वामहस्ताङ्गुल्यङ्गुष्ठैः क्रमेणान्नमपश्च स्पृष्ट्वा –

**ॐअद्येह (अमुक) सगोत्राय अस्मत्पित्रे (अमुक) शर्मणे सपत्नीकाय वसुस्वरूपाय अद्यकर्तव्यमहालयापरपक्षान्तर्गत-पार्वणश्राद्धे इदमन्नं सजलं सोपस्करं परिविष्टं परिवेक्ष्यमाणमक्षय्यतृप्तिहेतोस्ते स्वधा** ।

इति पितृब्राह्मणसमीपे भूमावेव मोटकादिकमुत्सृजेत् ।

एवं पितामहादिभ्यः पञ्चभ्यो दद्यात् ।

## १८. अपोशानम्

सव्येन देवब्राह्मणकरयोरपोशानं दद्यात् – **ॐ भवन्तौ प्राशयेताम्,** इति ।

अपसव्येन पितृब्राह्मणकरेषु चापोशानं दद्यात् – **ॐ भवन्तः प्राशयन्तु,** इति ।

## १९. प्रार्थना

सव्येन श्राद्धकर्ता कुशोपरि विशन् प्रार्थयेत् –

**ॐ मधुव्वाता० ॐ मधुनक्त० ॐ मधुमान्नः०** इति पठित्वा **ॐ मधु-३** ।

**ॐ अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत्** ।

**तत्सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः** ॥

**ॐ नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे** ।

**नमः पिनाकहस्ताय वज्रहस्ताय वै नमः** ॥ इति

## २०. ब्राह्मणभोजनम्

**यथासुखं जुषध्वम्,** इति वचनानन्तरं ते ब्राह्मणा मौनिनो भूत्वा भुञ्जीरन् संज्ञया च भक्ष्यं प्रार्थयेयुः । ततः सव्येन सव्याहृतिकां गायत्रीं जपित्वा **ॐ मधुव्वाता०** इति ऋचः पठित्वा पितृसूक्तं च पठेत् । ब्राह्मणानां यत्र यत्रेच्छोपलभ्यते तत्तत् प्रयच्छन् मन्दं मन्दं भोजयेत् ।

ततो ब्राह्मणान् तृप्तान् ज्ञात्वा **ॐ जलगण्डूषमिदं ते** इति उभाभ्यां विश्वेदेवब्राह्मणाभ्यां प्रत्येकं प्रत्यपोशानं दद्यात् ।

## २१. विकिरासनम्

पितामहान्नपात्रसन्निधौ आस्तृतदक्षिणाग्रकुशत्रयायां भूमौ अपसव्येन मोटकादिकमादाय विकिरासनं दद्यात् –

**असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम्** ।

**उच्छिष्टभागधेयानां दर्भेषु विकिरासनम्** ॥

इति मन्त्रेण मोटकरूपमासनमास्तृतकुशोपरि उत्सृजेत् ।

## २२. विकिरदानम्

सतिलघृतमन्नमादाय जलेनाऽऽप्लाव्य मोटकादिकं चाऽऽदाय –

**अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम** ।

**भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्** ॥

इति मन्त्रेणाऽऽस्तृतकुशोपरि अन्नं विकिरेत् ।

ततः कुशान् परित्यज्य, हस्तौ पादौ प्रक्षाल्य, सव्येन द्विराचम्य, गायत्रीं जपित्वा, **ॐ मधुव्वाता०** इत्यादिकं पठेत् ।

सव्येनैवाञ्जलिं बध्वा विश्वेदेवब्राह्मणौ प्रति पृच्छेत् –

**ॐ तृप्ताः स्थः** ? इति प्रश्नः । **ॐ तृप्ताः स्मः,** इति प्रतिवचनम् ।

**ॐ शेषमन्नं किं क्रियताम्** ? इति प्रश्नः । **ॐ इष्टैः सह भुज्यताम्,** इति प्रतिवचनम् ।

अपसव्येन पितृब्राह्मणाभ्यां प्रत्येकं प्रत्यपोशानं दद्यात् – **ॐ जलगण्डूषमिदं ते,** इति ।

अपसव्येनैव पितृब्राह्मणौ प्रति पृच्छेत् –

**ॐ तृप्ताः स्थः** ? इति प्रश्नः । **ॐ तृप्ताः स्मः,** इति प्रतिवचनम् ।

**ॐ शेषमन्नं किं क्रियताम्** ? इति प्रश्नः । **इष्टैः सह भुज्यताम्,** इति प्रतिवचनम् ।

**ॐ पिण्डदानमहं करिष्ये,** इति उभयत्र पृच्छेत् । **ॐ कुरुष्व** इत्यनुज्ञातः सन् ।

## २३. पिण्डवेद्या निर्माणं संस्कारश्च

पिण्डदानार्थं हस्तैकपरिमितां चतुरस्रां चतुरङ्गुलोच्छ्रितां सैकतादिकां दक्षिणप्लवां पिण्डिकां निर्माय पिण्डिकामध्ये वामेन पाणिना दर्भपिञ्जुलीं[४७] गृहीत्वा दक्षिणहस्ते कृत्वा सव्योपगृहीतदक्षिणपाणिना दक्षिणाग्रं रेखाद्वयं कुर्यात् –

**ॐ अपहताऽअसुरा रक्षा ꣸ सि व्वेदिषदः** ।

ततो दर्भपिञ्जुलीमुत्तरस्यां क्षिप्त्वा पिण्डवेद्यामङ्गारं भ्रामयेत् –

**ॐ ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति** ।

**परा पुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकान् प्रणुदात्यस्मात्** ॥

ततस्तदङ्गारं दक्षिणस्यां प्रक्षिप्य **ॐ शन्नोदेवी०** इति जलेन पिण्डिकासेचनम् । तदनु छिन्नमूलकुशान् दक्षिणाग्रान् पिण्डिकायामास्तीर्य सव्येन पठेत् –

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च** ।

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः** ॥

---

४७. अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥

तातम्बात्रितयमिति तर्पणविधि-निर्दिष्टश्लोकानुसारं पितृव्यादिसर्वेभ्यः पिंडा देयाः ॥

## २४. अवनेजनम्

अपसव्यं विधाय पुटकमेकं वामहस्ते कृत्वा मोटकादिकमादाय –

**ॐअद्येह (अमुक) सगोत्र अस्मत्पितः (अमुक) शर्मन् सपत्नीक वसुस्वरूप अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे पिण्डस्थानेऽत्रावनेजनं निक्ष्व ते स्वधा** ।

इत्यवनेजनं छिन्नमूलकुशोपरि दद्यात् ।

एवं पितामहादिभ्यः पञ्चभ्यो दद्यात् । तदर्थं तत्तत्पिण्डार्थमवनेजनं च देयम् ।

## २५. पिण्डदानम्

ततः पिण्डान् निर्माय मोटकादीनि प्रथमपिण्डं चादाय वामहस्ते पुटकादिस्थजलमादाय –

**ॐअद्येह (अमुक) सगोत्र अस्मत्पितः (अमुक) शर्मन् सपत्नीक वसुस्वरूप अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे एष पिण्डोऽमृतस्वरूपोऽक्षय्यतृप्तिहेतोस्ते स्वधा** ।

इत्यवनेजनोपरि पिण्डं दद्यात् ।

एवं पितामहादिभ्यः पञ्चभ्योऽवनेजनोपरि पिण्डं दद्यात् ।

तत आस्तृतकुशमूलेन **'लेपभागभुजस्तृप्यन्तु'** इति करं प्रोक्ष्य सव्यं कृत्वा द्विराचम्य हरिं स्मरेत् ।

## २६. पितृध्यानम्-

सव्येनैव पुष्पादीन्यादाय पित्रादीनुद्दिश्य –

**ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्,** इति वामावर्तेन वेद्या दक्षिणस्यां दिशि उत्तराभिमुखो भूत्वा श्वासं नियम्य भास्वरमूर्तीन् पितृन् ध्यायन् अपसव्यं कृत्वा दक्षिणावर्तेन आसने समागत्य दक्षिणाभिमुखो भूत्वा –

**ॐ अमीमदन्तपितरो यथाभागमावृषायिषत,** इति मन्त्रेण पुष्पादिकं पिण्डेषु क्षिपेत् ।

## २७. प्रत्यवनेजनम्

प्रत्यवनेजनपात्रं वामहस्ते कृत्वा मोटकादिकमादाय -

**ॐअद्येह (अमुक) सगोत्र अस्मत्पितः (अमुक) शर्मन् सपत्नीक वसुस्वरूप अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे इदं पिण्डप्रत्यवनेजनं ते स्वधा** ।

इति पितृपिण्डे प्रत्यवनेजनं दद्यात् । एवं पितामहादिपञ्चपिण्डेषु प्रत्यवनेजनं दद्यात् ।

ततो नीवीं विस्रंस्य सव्यं कृत्वा आचम्य हरिं स्मरेत् ।

## २८. सूत्रदानम्

अपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय –

**ॐ नमो वः पितरो रसाय १, नमो वः पितरः शोषाय २, नमो वः पितरो जीवाय ३, नमो वः पितरः स्वधायै ४, नमो वः पितरो घोराय ५, नमो वः पितरो मन्यवे ६, नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तसतो वः पितरो देष्मै तद्वः पितरो व्वास आधत्त ॥**

इति मन्त्रेण षट्कृत्वो नमस्कारं कुर्वन् प्रत्येकं पिण्डोपरि सूत्रं दद्यात् ।

## २९. पिण्डपूजनम् तदर्पणञ्च

ततः क्रमेण प्रत्येकं पिण्डान् गन्धादिभिः सम्पूज्य धूपदीपौ च कृत्वा मोटकादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्रा अस्मत्पितृ-पितामह-प्रपितामहाः (अमुकामुकामुक) शर्माणः सपत्नीकाः वसुरुद्रादित्यस्वरूपा अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे एतानि पिण्डार्चनानि अत्र सूत्रगन्धपुष्पाक्षतधूपदीपैक्षवादिनैवेद्यानि त्रेधा विभज्य युष्मभ्यं स्वधा ।**

इति पित्रादिभ्यो गन्धादिकमुत्सृजेत् ।

पुनरपि मोटकादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्रा अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहाः (अमुकामुकामुक) शर्माणः सपत्नीकाः वसुरुद्रादित्यस्वरूपा अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे एतानि पिण्डार्चनानि अत्र सूत्रगन्धपुष्पाक्षतधूपदीपैक्षवादिनैवेद्यानि त्रेधा विभज्य युष्मभ्यं स्वधा ।**

इति मातामहादिभ्यो गन्धादिकमुत्सृजेत् ।

## ३०. जलपुष्पतण्डुलादिदानम्

सव्येन विश्वेदेवब्राह्मणकरयोः जलपुष्पतण्डुलान् क्रमेण प्रत्येकं दद्यात् –

**ॐ शिवा आपः सन्तु** इति जलम्,

**ॐ सौमनस्यमस्तु** इति पुष्पम्,

**ॐ अक्षतं चारिष्टमस्तु** इति तण्डुलान् ।

एवमेव अपसव्येन पितृब्राह्मणकरयोश्च जलपुष्पतण्डुलान् क्रमेण प्रत्येकं दद्यात् ।

## ३१. आशिषः प्रार्थना

सव्येनाञ्जलिं बद्ध्वा पूर्वाभिमुखो भूत्वा इति पठेत् –

**ॐ अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम्।**

**ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु मे ॥**

**लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे।**

**लक्ष्मीर्वसति गोष्ठेषु सौमनस्यं ददातु मे ॥**

**अक्षतं चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिस्तथा।**

**यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥**

## ३२. अभिषेकः

कर्मपात्रोदकं कुशैर्गृहीत्वा प्रतिमन्त्रं स्वशिरस्यभिषिञ्चेत् –

**ॐ अस्मत्कुले दीर्घमायुरस्तु। ॐ शान्तिरस्तु। ॐ पुष्टिरस्तु। ॐ वृद्धिरस्तु। ॐ यच्छ्रेयस्तदस्तु। ॐ यत्पापं तत्प्रतिहतमस्तु** (इति भूमौ)। **ॐ द्विपदे चतुष्पदेभ्यः शान्तिर्भवतु** (इति शिरसि)। ततोऽपसव्येन पिण्डशेषान्नं पिण्डसमीपे विकिरेत्।

## ३३. अक्षय्योदकदानम्

वामहस्ते पुटकादिस्थजलं गृहीत्वा मोटकादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्रस्य अस्मत्पितुः (अमुक) शर्मणः सपत्नीकस्य वसुस्वरूपस्य अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे दत्तैतदन्नपानादिकम् अक्षय्यमस्तु।**

इति पितृपिण्डोपरि अक्षय्योदकं दद्यात्। एवं पितामहादिपञ्चभ्यो दद्यात्।

ततः सव्येन कृताञ्जलिर्दक्षिणां दिशमवलोकयन् पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् –

**ॐ अघोराः पितरः सन्तु** इति।

## ३४. आशिषः प्रार्थना

सव्येनैव प्राङ्मुखोऽञ्जलिं बद्ध्वा आशिषः प्रार्थयेत् –

(क) **ॐ गोत्रन्नो वर्धताम्।** **ॐ वर्धताम्** इति प्रतिवचनम्।

(ख) **ॐ दातारो नोऽभिवर्धन्ताम्।** **ॐ वर्धन्ताम्** इति प्रतिवचनम्।

(ग) **ॐ वेदाः वर्धन्ताम्** । **ॐ वर्धन्ताम्** इति प्रतिवचनम् ।

(घ) **ॐ सन्ततिर्वर्धताम्** । **ॐ वर्धताम्** इति प्रतिवचनम् ।

(ङ) **ॐ श्रद्धा च नो माव्यगमत्** । **ॐ मागात्** इति प्रतिवचनम् ।

(च) **ॐ बहुदेयं च नोऽस्तु** । **ॐ अस्तु** इति प्रतिवचनम् ।

(छ) **ॐ अन्नं च नो बहु भवेत्** । **ॐ भवतु** इति प्रतिवचनम् ।

(ज) **ॐ अतिथींश्च लभेमहि** । **ॐ लभध्वम्** इति प्रतिवचनम् ।

(झ) **ॐ याचितारश्च नः सन्तु** । **ॐ सन्तु** इति प्रतिवचनम् ।

(ञ) **ॐ मा याचिष्म कञ्चन** । **ॐ मा याचध्वम्** इति प्रतिवचनम् ।

(ट) **ॐ एताः सत्या आशिषः सन्तु** । **ॐ सन्तु** इति प्रतिवचनम् ।

## ३५. तिलककरणम्

श्राद्धकर्ता ब्राह्मणहस्तेन तिलकं कुर्यात्– **ॐ यं कामं कामयते सोऽस्मै कामः समृध्यताम्** । ततोऽपसव्येन सपवित्रान् कुशान्न्युब्जपात्राधःस्थितान् पिण्डोपरि निक्षिपेत् ।

## ३६. स्वधावाचनम्

**ॐ स्वधां वाचयिष्ये, ॐ वाच्यताम्** इति प्रतिवचनानन्तरं रिक्ताञ्जलिना पठेत् –

**ॐ अद्येह (अमुक) सगोत्रेभ्यः अस्मत्पितृ-पितामह-प्रपितामहेभ्यः (अमुकामुकामुक) शर्मभ्यः सपत्नीकेभ्यो वसुरुद्रादित्यस्वरूपेभ्यस्तथा (अमुक) सगोत्रेभ्यः अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहेभ्यः (अमुकामुकामुक) शर्मभ्यः सपत्नीकेभ्यो वसुरुद्रादित्यस्वरूपेभ्यः अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे स्वधोच्यताम्** ।

**ॐ अस्तु स्वधा** इति प्रतिवचनम् ।

## ३७. पयोधारादानम्

पयसादिसहितं पुटकं वामहस्ते कृत्वा सपवित्रकुशोपरि दक्षिणाग्रां पयोधारां दद्यात् –

**ॐ ऊर्जं वहन्तीरमृतङ्घृतं पयः कीलालं परिस्रुतम्** । **स्वधास्थ तर्पयत मे पितॄन्** ॥

ततो ब्राह्मणं पृच्छेत् – **ॐ पिण्डाः सम्पन्नाः** । **ॐ सुसम्पन्नाः,** इति प्रतिवचनम् ।

पुनः पृच्छेत् – **ॐ पिण्डानुत्थापयामि** । **ॐ उत्थापयस्व** इत्यनुज्ञातः सन्,

सव्येन नम्रीभूय पिण्डानाघ्राय अपसव्येन पिण्डानुत्थापयेत् ।

पिण्डाधारकुशानुल्मुकाँश्च वह्नौ क्षिपेत् ।

## ३८. पिण्डिकायां शृङ्खचक्रलेखनम् तत्पूजनञ्च

सव्येन पिण्डिकायां शृङ्खं चक्रं च विलिख्य यवैः पूजयेत् –

**ॐ शृङ्खाय नमः, ॐ चक्राय नमः ।**

## ३९. गयागमनम् पितृस्मरणञ्च

अपसव्यं कृत्वा उत्थाय पिण्डान् पिण्डिकोपरि निदध्यात् –

**ॐ गयायां पितृरूपेण स्वयमेव जनार्दनः ।**

**तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ॥**

## ४०. पिण्डपूजनम् कर्पूरदीपदानञ्च

सव्येन वसन्तादीन् षड्तून् पूजयेदेभिर्मन्त्रैः –

**ॐ वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमो नमः ।**

**वर्षाभ्यश्च शरत्संज्ञ ऋतवे च नमो नमः ॥**

**हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च ।**

**माससंवत्सरेभ्यश्च दिवसेभ्यो नमो नमः ॥**

ततः कर्पूरदीपं दत्त्वा सव्येनैव विश्वेदेवार्घपात्रं सञ्चाल्य अपसव्येन पित्रर्घपात्राण्युत्तानीकृत्य सव्येन दक्षिणां दद्यात् ।

## ४१. दक्षिणादानम्

कुशयवजलदक्षिणाद्रव्याण्यादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानां (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां पुरूरवार्द्रवनाम्नां विश्वेदेवपूर्वकाणाम् अद्यकृतैतन्महालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिवैश्वदेविकश्राद्धप्रतिष्ठासिद्ध्यर्थम् इमां दक्षिणां हिरण्यमग्निदैवतं तन्मूल्योपकल्पितं द्रव्यं यथादैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय दक्षिणात्वेन तुभ्यमहं सम्प्रददे** । इति ब्राह्मणकरे उत्सृजेत्

पुनर्दक्षिणासहितकुशादिकमादाय -

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानां (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां पुरूरवार्द्रवनाम्नां विश्वेदेवपूर्वकाणाम् अद्यकृतैतन्महालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिवैश्वदेविकश्राद्धप्रतिष्ठासिद्ध्यर्थम् इमां दक्षिणां हिरण्यमग्निदैवतं तन्मूल्योपकल्पितं द्रव्यं**

**यथादैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय दक्षिणात्वेन तुभ्यमहं सम्प्रददे ।** इति ब्राह्मणकरे उत्सृजेत्

ततः कुशतिलजलदक्षिणाद्रव्याण्यादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानां (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकृतैतन्महालयापरपक्षान्तर्गतपार्वणश्राद्ध-प्रतिष्ठासिद्ध्यर्थम् इमां दक्षिणां रजतं चन्द्रदैवतं तन्मूल्योपकल्पितं द्रव्यं यथादैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय दक्षिणात्वेन तुभ्यमहं सम्प्रददे ।**

इति ब्राह्मणकरे उत्सृज्य पुनः कुशतिलजलदक्षिणाद्रव्याण्यादाय –

**ॐ अद्येह (अमुक)सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानां (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकृतैतन्महालयापरपक्षान्तर्गतपार्वणश्राद्ध-प्रतिष्ठासिद्ध्यर्थम् इमां दक्षिणां रजतं चन्द्रदैवतं तन्मूल्योपकल्पितं द्रव्यं यथादैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय दक्षिणात्वेन तुभ्यमहं सम्प्रददे ।**

इति ब्राह्मणकरे उत्सृजेत् ।

पुनः कुशतिलजलभूयसीदक्षिणाद्रव्याण्यादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानां (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां तथा (अमुक) सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानां (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां विश्वेदेवपूर्वकाणाम् अद्य कृतैतन्महालयापरपक्षान्तर्गतपार्वणश्राद्धे न्यूनातिरिक्तपरिपूर्णार्थं यद्देयम् अन्नादिकं दक्षिणाद्रव्यं यथानामदैवतं नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यः कन्याकुमारेभ्यश्च यथाभागं विभज्य यथाकाले दातुमहमुत्सृजे ।** इत्युत्सृजेत्

## ४२. पितृविसर्जनम्

अपसव्येन पित्रादीन् विसर्जयेत् –

**ॐ व्वाजेवाजेऽवत व्वाजिनो नो धनेषु व्विप्राऽअमृताऽऋतज्ञाः ।**

**अस्य मद्ध्वः पिबत मादयध्वन्तृप्ता यात पथिभिर्द्देवयानैः ॥**

## ४३. विश्वेदेवविसर्जनम्

सव्यं कृत्वा **ॐ पुरूरवार्दवनामानो विश्वेदेवाः प्रीयन्ताम्** इति विश्वेदेवविसर्जनम् ।

ततः पठेत् –

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः** ॥ इति त्रिः

## ४४. दीपाच्छादनम्

अपसव्येन दीपाच्छादनं विधाय सव्यं कृत्वा हस्तौ पादौ प्रक्ष्याल्याऽऽचम्य पठेत् ।

## ४५. कर्मसमर्पणम्

**ॐ यत्कृतं तत् सुकृतमस्तु, यन्न कृतं तद्विष्णोः प्रसादात् ब्राह्मणवचनाच्च सर्वं परिपूर्णमस्तु** ॥१॥

**ॐ प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।**

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः** ॥२॥

**आयुः प्रजां धनं विद्यां स्वर्ग-मोक्ष-सुखानि च** ॥

**प्रयच्छन्तु तथा राज्यं पितरः श्राद्धतर्पिताः** ॥३॥

**कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिस्वभावात् ।**

**करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पये तत्** ॥

## ४६. अच्युतस्मरणम्

**ॐ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।**

**न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्** ॥ ॐ अच्युताय नमः-३

**ॐ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।**

**हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु** ॥ ॐ विष्णवे नमः-३

॥ इति पार्वणश्राद्धविधिः ॥

# अथ तीर्थश्राद्धविधिः

अत्र स्मृतिः –

आसनं पिण्डदानं च पुनः प्रत्यवनेजनम्।

दक्षिणा चान्नसङ्कल्पः सर्वतीर्थेष्वयं विधिः॥

गोग्रासम् –

सुरभिर्वैष्णवी माता नित्यं विष्णुपदे स्थिता।

गोग्रासं च मया दत्तं त्वं गृहाणानुकम्पया॥ इति गोग्रासम्।

श्वानबलिः –

द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ ।

ताभ्यामन्नं प्रयच्छामि स्यातामेतावहिंसकौ ॥ इति श्वानबलिः॥

काकबलिः –

काकोऽसि यमदूतोऽसि वायसोऽसि महाबल।

तुभ्यं बलिं प्रदास्यामि गृहाण यमकिङ्कर॥ इति काकबलिः॥

ब्राह्मणपादप्रक्षालनम् –

यत्फलं कपिलादाने कार्तिक्यां ज्येष्ठपुष्करे।

तत्फलं पाण्डवश्रेष्ठ विप्राणां पादशौचने॥

इत्यनेन विप्रदक्षिणपादप्रक्षालनम्।

विप्रपादोदकं पीत्वा यावत्तिष्ठति मेदिनी ।

तावत्पुष्करतीर्थेऽपि पिबन्ति पितरो जलम्॥

इत्यनेन वामपादप्रक्षालनम् ।

तिलककरणम् –

चन्दनं वन्द्यते नित्यं पवित्रं पापनाशनम्।

आपदो हरते नित्यं लक्ष्मीर्वसतु सर्वदा॥ इत्यनेन तिलककरणम्।

तीर्थश्राद्धे विशेषः –

हेमाद्रौ –

अर्घमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम्॥

तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत्॥

नाग्नौकरणं न नेतारं न च बलिर्वैश्वदेवता। इति पाद्मे०।

तीर्थश्राद्धं प्रकुर्वीत पक्वान्नेन विशेषतः।

आमान्नेन हिरण्येन कन्दमूलैः फलैरपि॥

॥ इति तीर्थश्राद्धविधिः॥

## १. तत्रादौ कर्मपात्रनिर्माणम्

हस्तौ पादौ प्रक्षाल्य आचमनं कृत्वा **ॐ यद्देवादेवहेडनम्** इति कण्डिकात्रयेण कर्मपात्रं विधाय कुशत्रयसहितं कर्मपात्रोदकमादाय श्राद्धीयवस्तूनि आत्मानमपि सिञ्चेत् –

**ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा।**

**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः॥** ॐ पुण्डरीकाक्षः पुनातु-३

## २. प्रार्थना

करौ सम्पुटीकृत्य विष्णुं मनसा ध्यायन् पूर्वाभिमुखः प्रार्थयेत् –

**ॐ नमो नमस्ते गोविन्द पुराणपुरुषोत्तम।**

**इदं श्राद्धं हृषीकेश रक्षतां सर्वतो दिशः॥**

## ३. प्रतिज्ञासङ्कल्पः

ततः तीर्थश्राद्धनिमित्तं सङ्कल्पं कुर्यात् –

ॐ तत्सदिति अद्येह (अमुक) मासे (अमुक) पक्षे (अमुक) तिथौ (अमुक) वासरे (अमुक) तीर्थे मम आत्मनः समस्तपितॄणां समुद्धरणार्थं मातृपितृगुरुस्वस्रादिपितृणाम् अक्षय्यतृप्तिहेतोः समस्ततीर्थश्राद्धजन्यफलप्राप्त्यर्थम् (अमुक) तीर्थे तीर्थश्राद्धं पिण्डदानं चाहं करिष्ये।

## ४. वेदीनिर्माणम्

अपसव्यं विधाय दक्षिणाभिमुखः प्राचीनावीती पातितवामजानुर्दक्षिणप्लवां वेदीं निर्माय पञ्चगव्येनाभिषिच्य परितस्तिलगौरसर्षपपुष्पचन्दनानि विकिरेत्।

## ५. आसनम्

वेद्यां मोटकरूपाणि आसनानि प्रत्येकं स्थापयेदनेन मन्त्रेण –

**ॐ अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।**

**पुरी द्वारावती चैव सप्तैता मोक्षदायकाः ॥**

**ॐ कव्यवाडनलः सोमो यमश्चैवार्यमा तथा ।**

**अग्निष्वात्ता बर्हिषदः सोमपाः पितरस्तथा ॥** इति

## ६. अवनेजनम्

आसनोपरि तिलजलपुष्पगन्धादीनि पात्रे कृत्वा कुशादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्राणां मम पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां तथा (अमुक) सगोत्राणाम् अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां यथायथागोत्राणामन्येषां च पितॄणाम् आसनोपरि अवनेजनमहं सम्प्रददे ॥**

इत्यनेनाऽऽसनोपरि पात्रस्थं जलमर्धं दद्यात्, अर्धं जलम् अवशेषयेत् ।

## ७. पिण्डदानम्

पिण्डमादाय

**ॐ अद्येह (अमुक) सगोत्रो अस्मत्पिता (अमुक) नामा तस्य अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयम् अमृतरूपं तिलमधुजलप्रोक्षितं पिण्डं तस्मै स्वधा ॥**

**ॐ अद्येह (अमुक) सगोत्रो अस्मत्पितामहः (अमुक) नामा तस्य अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयम् अमृतरूपं तिलमधुजलप्रोक्षितं पिण्डं तस्मै स्वधा ॥**

**ॐ अद्येह (अमुक) सगोत्रो अस्मत्प्रपितामहः (अमुक) नामा तस्य अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयम् अमृतरूपं तिलमधुजलप्रोक्षितं पिण्डं तस्मै स्वधा ॥**

**ॐ अद्येह (अमुक) सगोत्रा अस्मन्माता (अमुक) नाम्नी देवी तस्या अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयम् अमृतरूपं तिलमधुजलप्रोक्षितं पिण्डं तस्यै स्वधा ॥**

**ॐ अद्येह (अमुक) सगोत्रा अस्मत्पितामही (अमुक) नाम्नी देवी तस्या अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयम् अमृतरूपं तिलमधुजलप्रोक्षितं पिण्डं तस्यै स्वधा ॥**

**ॐ अद्येह (अमुक) सगोत्रा अस्मत्प्रपितामही (अमुक) नाम्नी देवी तस्या अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयम् अमृतरूपं तिलमधुजलप्रोक्षितं पिण्डं तस्यै स्वधा ॥**

**ॐ अद्येह (अमुक) सगोत्रो अस्मन्मातामहः (अमुक) नामा तस्य अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयम् अमृतरूपं तिलमधुजलप्रोक्षितं पिण्डं तस्मै स्वधा ॥**

**ॐ अद्येह (अमुक) सगोत्रो अस्मत्प्रमातामहः (अमुक) नामा तस्य अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयम् अमृतरूपं तिलमधुजलप्रोक्षितं पिण्डं तस्मै स्वधा ॥**

**ॐ अद्येह (अमुक) सगोत्रो अस्मद्वृद्धप्रमातामहः (अमुक) नामा तस्य अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयम् अमृतरूपं तिलमधुजलप्रोक्षितं पिण्डं तस्मै स्वधा ॥**

**ॐ अद्येह (अमुक) सगोत्रा अस्मन्मातामही (अमुक) नाम्नी देवी तस्या अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयम् अमृतरूपं तिलमधुजलप्रोक्षितं पिण्डं तस्यै स्वधा ॥**

**ॐ अद्येह (अमुक) सगोत्रा अस्मत्प्रमातामही (अमुक) नाम्नी देवी तस्या अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयम् अमृतरूपं तिलमधुजलप्रोक्षितं पिण्डं तस्यै स्वधा ॥**

**ॐ अद्येह (अमुक) सगोत्रा अस्मद्वृद्धप्रमातामही (अमुक) नाम्नी देवी तस्या अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयम् अमृतरूपं तिलमधुजलप्रोक्षितं पिण्डं तस्यै स्वधा ॥**

एवं प्रकारेण सपत्नजननी-पत्नीपुत्रकन्यापितृव्य-मातुल-भ्रातृ-पितृस्वसृ-मातृस्वस्रात्मभगिनी-पितृव्यपुत्र जामातृभागिनेयश्वशुर-श्वश्रूपाध्यायाचार्य-गुरु-मित्र-शिष्याणामेतेषां पुरुषविषये सपत्नीकानां स्त्रीविषये सभर्तृकसापत्यानां नाम गोत्रोच्चारणपूर्वकं स्वरूपोच्चारणं कृत्वा पिण्डान् दद्यात्॥

**ॐ आब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः ।**

**वंशद्वये ये मम दासभूता भृत्यास्तथा वाऽऽश्रितसेवकाश्च ॥**

**मित्राणि शिष्याः पशवश्च वृक्षा दृष्टाश्च स्पृष्टाश्च कृतोपकाराः ।**

**जन्मान्तरे ये मम सङ्गताश्च तेभ्यः स्वधा पिण्डमहं ददामि ॥**

**ये केचित् प्रेतरूपेण वर्तन्ते पितरो मम ।**

**ते सर्वे तृप्तिमायान्तु पिण्डदानेन शाश्वतीम् ॥**

**ये बान्धवाऽबान्धवा ये येऽन्यजन्मनि बान्धवाः ।**

**तेभ्यः पिण्डो मया दत्तः अक्षय्यमुपतिष्ठतु ॥**

**पितृवंशे मृता ये च मातृवंशे तथैव च ।**

**गुरुश्वशुरबन्धूनां ये चाऽन्ये बान्धवा मृताः ॥**

**ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।**

**तेभ्यः पिण्डो मया दत्तः अक्षय्यमुपतिष्ठतु ॥**

## ८. प्रत्यवनेजनम्

**ॐ अद्येह (अमुक) सगोत्राणां मम पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां तथा मातृ-पितामही-प्रपितामहीनाम् (अमुकामुकामुक) देवीनां पिण्डोपरि प्रत्यवनेजनं सम्प्रददे इति**। एवं मातामह-प्रमातामह-वृद्धप्रमातामहानां सपत्नीकानां पिण्डोपरि प्रत्यवनेजनं दद्यात्। इत्यनेन पिण्डोपरि अर्धशेषजलं दद्यात्।

## ९. पिण्डपूजनम्

गन्धपुष्पधूपदीपनैवेद्यताम्बूलपूगीफलैलालवङ्गयज्ञोपवीतवस्त्रतुलसीदलादिकं दत्त्वा पूजयेत्।

## १०. तर्पणम्

जलेन नामगोत्रोच्चारणं कृत्वा तर्पणं कुर्यात्। ततः सव्यं कृत्वाऽऽचामेत्।

## ११. विष्णोः स्मरणम्

**ॐ प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च।**

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः॥**

इति विष्णुस्मरणं कुर्यात्।

## १२. सूर्यायार्घ्यदानम्

**ॐ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते।**

**अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर॥**

इति सूर्याय अर्घ्यं दत्त्वा नमस्कारं च कृत्वा यथाशक्त्या ब्राह्मणपूजनं भोजनदक्षिणादानं च कुर्यात्।

## १३. दक्षिणादानम्

**ॐ अद्यकृतैतत् तीर्थश्राद्धसाङ्गतासिद्ध्यर्थं मम समस्तपितॄणाम् अक्षय्यतृप्त्यर्थम् आत्मना सह सर्वेषामुद्धरणाय न्यूनातिरिक्तदोषपरिहारार्थम् इदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणात्वेन तुभ्यमहं सम्प्रददे।**
**ॐ स्वस्तीति** प्रतिवचनम्।

## १४. विसर्जनम्

ॐ नमो वः पितरो० । ततोऽभिगम्यतामिति विसर्जनम् ।

पिण्डानाघ्रायोत्थाय जले गवे वा दद्यात् । शेषं कुशादिकं जले निक्षिपेत् ।

## १५. मन्त्रपाठः

**हरिः ॐ शतमिन्नु शरदोऽअन्तिदेवा यत्रानश्चक्राजरसन्तनूनाम् ।**

**पुत्रासो यत्र पितरो भवन्ति मा नो मद्ध्यारीरिषतायुर्गन्तोः ॥१॥**

**अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता स पिता स पुत्रः ।**

**विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम् ॥२ ॥**

**स्वादुषꣳसदः पितरो व्वयोधाः कृच्छ्रेश्रिताः शक्तिवन्तो गभीराः ।**

**चित्रसेनाऽइषुबलाऽअमृध्राः सतोवीराऽउरवोव्व्रातसाहाः ॥३॥**

**ब्राह्मणासः पितरः सोम्यासः शिवेनो द्यावापृथिवी अनेहसा ।**

**पूषानः पातु दुरितादृतावृधो रक्षा मा कीर्नो अघशꣳसऽईशत ॥४॥**

**पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा**

**नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः ॥**

**अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धद्ध्वम् ॥५॥**

**पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।**

**पवित्रेण शतयुषा पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।**

**पवित्रेण शतयुषा व्विश्वमायुर्व्यश्नवै ॥६॥**

॥ इति तीर्थश्राद्धविधिः ॥

# अथ एकपार्वणश्राद्धविधिः

अत्र त्रयः पिण्डाः । एको विश्वेदेवब्राह्मणः । अन्यः पितृब्राह्मणः ।

## १. दीपूजनम्

आचम्य[४८] प्राणानायम्य गोमयोपलिप्ते[४९] प्राङ्गणे दीपं प्रज्वाल्य पूजयेत् –

**ॐ रक्षोघ्नदीपाय नम** ः ।

**ॐ पवित्रेस्थः** इति मन्त्रेण ब्राह्मणं पवित्रं कुर्यात्[५०] ।

## २. निमन्त्रणम्

सव्येन पूर्वाभिमुखो भूत्वा वामहस्तेन विश्वेदेवब्राह्मणस्य दक्षिणजानु स्पृष्ट्वा स्वदक्षिणजानु च पातयित्वाऽधोमुखेन स्वदक्षिणहस्तेन सताम्बूलादिकम् उत्तानं विप्रकरं गृहीत्वा निमन्त्रयेत् –

**ॐ अद्येत्यादि (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां विश्वेषां देवानां पुरूरवार्द्रवनाम्नाम् अद्यकर्तव्यसांवत्सरिकैकपार्वणश्राद्धे एभिश्चन्दनपुष्पाक्षतपूगीफलयज्ञोपवीतवासोभिस्त्वं मया निमन्त्रितः** ॥

**ॐ निमन्त्रितोऽस्मि** इति प्रतिवचनम् ।

ततोऽपसव्यं कृत्वा दक्षिणाभिमुखो भूत्वा वामहस्तेन पितृब्राह्मणस्य वामजानु स्पृष्ट्वा स्ववामजानु च पातयित्वा उत्तानेन स्वदक्षिणकरेण सताम्बूलादिकं विप्रकरं गृहीत्वा निमन्त्रयेत् –

**ॐ अद्येत्यादि (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्तव्यसांवत्सरिकैकपार्वणश्राद्धे एभिश्चन्दनपुष्पाक्षतपूगीफलयज्ञोपवीतवासोभिस्त्वं मया निमन्त्रितः** ॥

**ॐ निमन्त्रितोऽस्मि** इति प्रतिवचनम् ।

---

४८. श्राद्धारम्भेऽवसाने च पादशौचे तथार्चने । विकिरे पिण्डदाने च षट्स्वाचमनमिष्यते ॥ - इति मनुः

४९. शुचिदेशं विविक्तं नु गोमयेनोपलेपयेत् । श्राद्धे दीपप्रदानेन तेजस्वी जायते नरः । दीपहीने दहेच्छ्राद्धमन्धे तमसि मज्जति । – इति ब्राह्मे ।

५०. निधाय वा दर्भवटूनासनेषु समाहितः । प्रैषाऽनुप्रैषसंयुक्तं पर्वश्राद्धं प्रकल्पयेत् ॥ इति

ततः प्रार्थना –

**ॐ अक्रोधनैः शौचपरैः सततं ब्रह्मवादिभिः ।**

**भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ॥**

**सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।**

**भवितव्यं भवद्भिर्नोऽद्यतने श्राद्धकर्मणि ॥**

**ॐ भवितव्यम्** इति प्रतिवचनम् ।

## ३. पादार्घः

सव्येन विश्वेदेवब्राह्मणस्य चरणौ प्रक्षालयेत् –

**ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**

**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ॥१॥**

पाद्यपात्रं वामहस्ते कृत्वा –

**ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये । शँयोरभिस्रवन्तु नः ॥**

इति मन्त्रं पठित्वा कुशादिकमादाय -

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवार्द्रव नामान एष पादार्घो वः स्वाहा ॥**

ततोऽपसव्येन पितृब्राह्मणस्य चरणौ प्रक्षालयेत् –

**ॐ नमोस्त्वनन्ताय ०**

**ॐ यत्फलं कपिलादाने कार्त्तिक्यां ज्येष्ठपुष्करे ।**

**तत्फलं पाण्डवश्रेष्ठ विप्राणां पादशौचने ॥**

**विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।**

**तावत्पुष्करपात्रेषु पिबन्ति पितरो जलम् ॥**

पाद्यपात्रं वामहस्ते कृत्वा **ॐ शन्नोदेवीः** इति मन्त्रान्ते मोटकमादाय –

**ॐ अद्येह (अमुक) सगोत्रा अस्मत्पितृ-पितामह-प्रपितामहा (अमुकामुकामुक) शर्माणः सपत्नीकाः वसुरुद्रादित्यस्वरूपा अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे एष पादार्घस्त्रेधा विभज्य युष्मभ्यं स्वधा ॥**

ततः सव्येनाऽऽचम्य गृहं प्रवेशयेत् ।

## ४. स्वागतमुपवेशनञ्च

**ॐ आगता यूयम्। ॐ सुस्वागता वयम्। ॐ इदमासनम् आस्यताम्।**

**ॐ आस्यते** इति प्रतिवचनम्।

**ॐ भूर्भुवःस्वः** इति मन्त्रेण विश्वेदेवब्राह्मणं पूर्वाभिमुखमुपवेशयेत्।

ततोऽपसव्येन – **ॐ आगता यूयम्। ॐ सुस्वागता वयम्। ॐ इदमासनम् आस्यताम्।**

**ॐ आस्यते** इति प्रतिवचनम्।

**ॐ भूर्भुवःस्वः** इति मन्त्रेण पितृब्राह्मणमुदङ्मुखमुपवेशयेत्।

## ५. कर्मपात्रनिर्माणम्

सव्येन **ॐ कर्मपात्रमहं करिष्ये,** इति विश्वेदेवं पृच्छेत्। **ॐ कुरुष्व** इत्यनुज्ञातः सन् –

**ॐ यद्देवा देवहेडनं देवासश्चकृमा व्वयम्।**

**अग्निर्म्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः॥**

**ॐ यदि दिवा यदि नक्तमेनाꣳसि च कृमा व्वयम्।**

**वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः॥**

**ॐ यदि जाग्रद्यदि स्वप्नमेनाꣳसि च कृमा व्वयम्।**

**सूर्योमा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः॥**

कर्मपात्रार्थं पात्रं पुरतो निधाय तस्मिन् पात्रे पवित्रं क्षिपेत् –

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः।**

तत्रैव जलम् – **ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये। शँयोरभिस्रवन्तु नः॥**

तत्र यवान् – **ॐ यवोऽसि यवयास्मद् द्वेषो यवयारातीः॥**

तत्र चन्दनम् – **ॐ गन्धद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम्।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥**

तत्र पुष्पम् – **ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण॥**

अपसव्यं कृत्वा **ॐ कर्मपात्रमहङ्करिष्ये,** इति पितृब्राह्मणं पृच्छेत्। **ॐ कुरुष्व** इत्यनुज्ञातः सन् पूर्वोक्तप्रकारेण कर्मपात्रं कुर्यात्। यवप्रक्षेपस्थाने **ॐ तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः स्वधया**

**पितॄन् लोकान् पृणाहि नः** ॥ इति तिलान् प्रक्षिपेत्। एतावानेव विशेषः। अन्यत्सर्वं पूर्ववद्विधाय सव्येन कुशत्रयसहितं कर्मपात्रोदकमादाय श्राद्धदेशं द्रव्याण्यात्मानं च सिञ्चेत् –

**ॐ अपवित्र: पवित्रो वा सर्वावस्थाङ्गतोऽपि वा।**

**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः** ॥ ॐ पुण्डरीकाक्षः पुनातु-३

## ६. प्रतिज्ञासङ्कल्पः

**ॐ तत्सत्-३ ॐ विष्णुः-३ अद्येत्यादि देशकालौ सङ्कीर्त्य (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां पुरूरवार्द्रवनाम्नां विश्वेदेवपूर्वकाणाम् अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धम् एभिर्द्रव्यैरहं करिष्ये।**

इति प्रतिज्ञाय प्रार्थयेत् – [५१]

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः** ॥ इति त्रिः

**सप्तव्याधा दशार्णेषु मृगाः कालाञ्जरे गिरौ।**

**चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे** ॥

**तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः।**

**प्रस्थिता दूरमध्वानं यूयं किमवसीदथ** ॥

**ये विप्रमुख्याः कुरुजाङ्गलेषु जातास्तथा दासकुले मृगाश्च।**

**कालाञ्जरे सप्त च चक्रवाका ये मानसे ते वयमत्र सिद्धाः** ॥

**पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः।**

**यत्र यत्र स्मरेद् विद्वान् पितृणां दत्तमक्षयम्** ॥

**श्राद्धभूमौ गयां ध्यात्वा तथा देवं गदाधरम्।**

**ताभ्यां चैव नमस्कृत्य ततः श्राद्धं समारभेत्** ॥

**गयागजो गयादित्यो गायत्री च गदाधरः ।**

**गया गयासुरश्चैव षड्गया मुक्तिदायकाः** ॥

**ईशान-विष्णु-कमलासन-कार्तिकेय-वह्नि-त्रयार्क-रजनीश-गणेश्वराणाम्।**

**क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां पादान्नमामि सततं पितृमुक्तिहेतोः** ॥

**ॐ गयायै नमः। ॐ गदाधराय नमः।**

---

५१. हेमाद्रौ ब्रह्माण्डे - आदिमध्यावसानेषु त्रिरावृत्तं जपेत् बुधः।

## ७. दिग्बन्धनम्

अपसव्येन दिग्बन्धनम् । तिलसहितं मोटकमादाय पूर्वादिक्रमेण वक्ष्यमाणमन्त्रैस्तिलान् विकिरेत् –

पूर्वे – **ॐ अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ।**
**अपहताऽअसुरा रक्षाꣳसि व्वेदिषदः ॥**

दक्षिणे – **ॐ तथा बर्हिषदः पान्तु याम्यां ये पितरः स्थिताः ।**
**अपहताऽअसुरा रक्षाꣳसि व्वेदिषदः ॥**

पश्चिमे – **ॐ प्रतीचीमाज्यपास्तद्वत् । अपहताऽअसुरा रक्षाꣳसि व्वेदिषदः ॥**

उत्तरे – **ॐ उदीचीमपि सोमपाः । अपहताऽअसुरा रक्षाꣳसि व्वेदिषदः ॥**

ऊर्ध्वमधश्च – **ॐ उद्ध्र्वतस्त्वर्यमा रक्षेत्कव्यवाडनलोऽप्यधः ।**

सर्वतः – **ॐ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ।**
**सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ॥**

## ८. नीविबन्धनम्

पुष्पसहितं मोटकं वामकट्यां धारयेदनेन मन्त्रेण –

**ॐ निहन्मि सर्वं यदमेध्यवद् भवेद् हताश्च सर्वेऽसुरदानवा मया ।**
**रक्षांसि यक्षाः सपिशाचगुह्यका हता मया यातुधानाश्च सर्वे ॥**

## ९. दानवादीनामपसारणम्

पुनः कुशखण्डत्रयसहिततिलानादाय दक्षिणस्यां क्षिपेत् –

**ॐ प्रयान्तु दूरतः सर्वे दैतेया दानवास्तथा ।**
**सर्वविघ्नोपशान्त्यर्थं क्षिपामि च कुशाँस्तिलान् ॥**

## १०. विष्णोःस्मरणम्

सव्येन विष्णुं स्मरेत् –

**ॐ नमो नमस्ते गोविन्द पुराण पुरुषोत्तम ।**
**इदं श्राद्धं हृषीकेश रक्षतां सर्वतो दिशः ॥** इति रक्षार्थं विष्णुस्मरणम्

## ११. आसनम्

कुशादीन्यादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां विश्वेषां देवानां पुरूरवार्द्रवनाम्नाम् अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे इदं कौशमासनं वः स्वाहा ॥**

ततोऽपसव्यं कृत्वा मोटकमादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे इदं मोटकरूपमासनं त्रेधा विभज्य युष्मभ्यं स्वधा ॥**

## १२. आवाहनम्

सव्येनाञ्जलिं बद्ध्वा यवाँश्चादाय विश्वान् देवानावाहयेत् –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वान् देवान् पुरूरवार्द्रवनाम्न आवाहयिष्ये ॥**

**ॐ आवाहय** इत्यनुज्ञाते **ॐ विश्वेदेवास०** इति मन्त्रं पठित्वा,

**ॐ आगच्छन्तु महाभागा विश्वेदेवाः महाबलाः ।**

**ये अत्र विहिता श्राद्धे सावधाना भवन्तु मे ॥**

इति पठन्नावाह्य **ॐ यवोसि** इति मन्त्रेण श्राद्धदेशे यवान् विकिरेत् ।

ततोऽपसव्येनाञ्जलिं बद्ध्वा पितृनावाहयेत् –

**ॐ अद्येह (अमुक) सगोत्रान् अस्मत्पितृ-पितामह-प्रपितामहान् (अमुकामुकामुक) शर्मणः सपत्नीकान् वसुरुद्रादित्यस्वरूपान् अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे आवाहयिष्ये ॥**

**ॐ आवाहय** इत्यनुज्ञाते **ॐ उशन्तस्त्वा०, ॐ आयन्तुनः०** इति मन्त्रद्वयं पठन्नावाह्य श्राद्धदेशे तिलान् विकिरेत्– **ॐ अपहताऽअसुरा रक्षाᳬसि व्वेदिषदः ॥**

## १३. हस्तार्घः

सव्येन विश्वेदेवब्राह्मणं पृच्छेत् – **ॐ हस्तार्घपात्रमहं करिष्ये ।**

**ॐ कुरुष्व** इत्यनुज्ञातः सन् पुटकमेकमग्रे कृत्वा,

तत्र **ॐ पवित्रेस्थः०** इति मन्त्रेण पूर्वाग्रं पवित्रं क्षिपेत् ।

तत्रैव **ॐ शन्नोदेवीः** इति जलम्, **ॐ यवोसि** इति यवान्। **ॐ श्रीश्चते लक्ष्मीः** इति पुष्पम्। **ॐ गन्धद्वाराम्** इति चन्दनं प्रक्षिपेत्।

ततो विश्वेदेवं पृच्छेत् – **ॐ हस्तार्घपात्रं सम्पन्नम्**। **ॐ सुसम्पन्नम्** इत्युक्ते,

पुनः पृच्छेत् – **ॐ हस्तार्घपात्रमुत्थापयामि**। **ॐ उत्थापयस्व** इत्यनुज्ञातः सन्,

हस्तार्घपात्रं वामहस्ते कृत्वा सपुष्पं पवित्रं गृहीत्वा **ॐ नमो नारायणाय** इति मन्त्रेण विप्रकरे पुष्पसहितं पूर्वाग्रं पवित्रं धृत्वा दक्षिणकरेण पुटकमुखं पिधाय तत्रस्थं जलमभिमन्त्रयेत् –

**ॐ या दिव्या आपः पयसा सम्बभूवुर्याऽअन्तरिक्षाऽउत पार्थवीर्याः** ॥

**हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः सꣳस्योनाः सुहवा भवन्तु** ॥

ततः कुशयवजलान्यादाय –

**ॐ अद्येह** (**अमुक**) **सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम्** (**अमुकामुकामुक**) **शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवार्द्रवनामानः अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे एष हस्तार्घो वः स्वाहा**।

इति ब्राह्मणकरेऽर्घं दद्यात्। **ॐ अर्घे पुनः प्रत्यर्घमस्तु** इति विप्रकरस्थं सपुष्पं पवित्रमर्घपात्रे धृत्वा तदर्घपात्रं भूमौ संस्थाप्यार्घपात्रस्थजलेन **ॐ तच्चक्षुर्देवहितम्** इति चक्षुःस्पर्शः कार्यः। तदनन्तरम् **ॐ विश्वेभ्यो देवेभ्यः स्थानमसि** इति विश्वेदेवदक्षिणपार्श्वे उत्तानं स्थापयेत्।

ततोऽपसव्येन पितृब्राह्मणं पृच्छेत् – **ॐ हस्तार्घपात्राण्यहं करिष्ये**।

**ॐ कुरुष्व** इत्यनुज्ञातः सन् पित्रादित्रिभ्यः स्वाऽग्रे पुटकत्रयमासाद्य,

तेषु **ॐ पवित्रेस्थः०** इति मन्त्रेण दक्षिणाग्राणि पवित्राणि क्षिपेत्।

तेष्वैव **ॐ शन्नोदेवीः** इति जलम्, **ॐ तिलोसि** इति तिलान्। **ॐ श्रीश्चते लक्ष्मीः** इति पुष्पम्। **ॐ गन्धद्वाराम्** इति चन्दनं प्रक्षिपेत्।

ततो पितृब्राह्मणं पृच्छेत् – **ॐ हस्तार्घपात्राणि सम्पन्नानि**। **ॐ सुसम्पन्नानि** इति प्रत्युक्ते,

पुनः पृच्छेत् – **ॐ हस्तार्घपात्राण्युत्थापयामि**। **ॐ उत्थापयस्व** इत्यनुज्ञातः सन्,

प्रथमं पित्रर्घपात्रं वामहस्ते कृत्वा सपुष्पं पवित्रं गृहीत्वा **ॐ नमो नारायणाय** इति पितृतीर्थेन विप्रकरे पुष्पसहितमुत्तराग्रं पवित्रं धृत्वाऽधोमुखेन दक्षिणकरेण हस्तार्घपात्रमुखं पिधाय **ॐ या दिव्या०** इति मन्त्रेण तत्रस्थं जलमभिमन्त्र्य तिलजलमोटकमादाय –

**ॐ अद्येह (अमुक) सगोत्र अस्मत्पितः (अमुक) शर्मन् सपत्नीक वसुस्वरूप अद्यकर्तव्यसांवत्सरिकैकपार्वणश्राद्धे एष हस्तार्घस्ते स्वधा** ।

इति ब्राह्मणकरे अर्घं दद्यात्। **ॐ अर्घे पुनः प्रत्यर्घमस्तु** इति ब्राह्मणकरस्थं पवित्रमर्घपात्रे निधाय तमर्घपात्रं भूमौ स्थापयेत्।

एवं प्रकारेण पितामहप्रपितामहाभ्यामपि दत्त्वा प्रपितामहपात्रस्थजलादिकं पितामहार्घपात्रे कृत्वा तदुभयं पित्रर्घपात्रे कृत्वा पुनः पित्रर्घपात्रं पितामहार्घपात्रे कृत्वा तदुभयं प्रपितामहार्घपात्रोपरि धृत्वा सव्यं कृत्वा तत्रस्थजलेन [५२] **ॐ तच्चक्षुर्देवहितम्** इति चक्षुः स्पर्शः। ततोऽपसव्येन पितृद्विजस्य वामभागे **ॐ पितृभ्यः स्थानमसि** इति न्युब्जं कृत्वा तदुपरि कुशत्रयं दद्यात् ।

## १४. अर्चनमर्पणञ्च

सव्येन विश्वेदेवब्राह्मणं पृच्छेत् – **ॐ अर्चयिष्ये** । **ॐ अर्चय** इत्युक्ते[५३] गन्ध-पुष्पाक्षत-धूप-दीप-द्रव्य-ताम्बूल-यज्ञोपवीत-वस्त्रादिभिरभ्यर्च्य ब्राह्मणाय तिलकं दत्त्वा धूपदीपौ च कारयेत् । ततः कुशादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवार्द्रवनामानः एतान्यर्चनानि अत्र गन्धपुष्पाक्षतधूपदीपनैवेद्यताम्बूलयज्ञोपवीतद्रव्यवासांसि वः स्वाहा** ॥ इत्युत्सृजेत् ।

ततोऽपसव्येन पितृब्राह्मणं पृच्छेत् – **ॐ अर्चयिष्ये** । **ॐ अर्चय** इत्युक्ते गन्धादिभिरभ्यर्च्य ब्राह्मणाय तिलकं दत्त्वा धूपदीपौ च कारयेत्। ततो मोटकादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्रा अस्मत्पितृ-पितामह-प्रपितामहाः (अमुकामुकामुक) शर्माणः सपत्नीका वसुरुद्रादित्यस्वरूपा एतान्यर्चनानि अत्र गन्धपुष्पाक्षतधूपदीपनैवेद्य-ताम्बूलयज्ञोपवीतोपायनवासांसि त्रेधा विभज्य युष्मभ्यं स्वधा** ॥ इत्युत्सृजेत् ।

सव्येन विश्वेदेवब्राह्मणहस्ते **ॐ अर्चनविधेः सर्वं परिपूर्णमस्तु** इति जलं दद्यात्। **ॐ अस्तु परिपूर्णम्** इति प्रत्युक्ते सव्येनैव विश्वेदेवब्राह्मणभोजनस्थाने चतुर्दिक्षु चतुष्कोणमण्डलं कुर्यात्।

---

५२. आयुष्कामस्य नेत्रसेचनमिति स्कान्दे । संश्रवाँश्च ततः सर्वान् पात्रे कुर्यात् समाहितः । पितृभ्यः स्थानमसीति न्युब्जपात्रं निधापयेदिति कौर्मे । तस्यैवोपरि कुशान् दत्त्वेति वैजवापः । श्राद्धारम्भे तु ये दर्भा पादशौचे विवर्जयेत् । अर्चनादौ तु ये दर्भा उच्छिष्टान्ते विवर्जयेत् ॥ मार्जनादौ तु ये दर्भाः पिण्डोत्थाने विवर्जयेत् । उत्थानान्ते तु ये दर्भा दक्षिणान्ते विवर्जयेत् ॥ प्रार्थनादौ तु ये दर्भाः नमस्कारे विसर्जयेत् । - इति स्मृत्यन्तरे

५३. अत्र नाम जलम् । ब्राह्मणपूजायां नैवेद्याभावः प्रमाणमाकरे द्रष्टव्यम् । धूपदीपावसाने तु आच्छादनं नियोजयेदिति हेमाद्रौ कालिकापुराणे । (क) छन्दोगा जुहुयुः सव्येनापसव्येन याजुषाः ॥ इति वृद्धयाज्ञवल्क्यः ॥

## १५. चतुष्कोणमण्डलनिर्माणम्

जलेन आसनसहितं चतुष्कोणं मण्डलं कुर्यात् –

**ॐ यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति ।**

**एवं मण्डलभस्मैतत् सर्वभूतानि रक्षतु ॥**

ततोऽपसव्येन पितृब्राह्मणहस्ते **ॐ अर्चनविधेः सर्वं परिपूर्णमस्तु** इति जलं दद्यात्। **ॐ अस्तु परिपूर्णम्** इति प्रत्युक्ते पितृब्राह्मणभोजनस्थाने चतुर्दिक्षु आसनसहितं चतुष्कोणमण्डलं पूर्वोक्तमन्त्रेणैव कुर्यात्।

## १६. अग्नौकरणम्

अपसव्येनैवाग्नौकरणम्। दक्षिणाभिमुखो भूत्वा वामजानु पातयित्वा पुटकादौ सघृतमन्नं कृत्वा पितृब्राह्मणं पृच्छेत् – **ॐ अग्नौकरणमहं करिष्ये ।** **ॐ कुरुष्व,** इत्यनुज्ञातः सन् पितृब्राह्मणकरे जलपात्रे वाऽऽहुतिद्वयं जुहुयात् –

**ॐ अग्नये कव्यवाहनाय स्वाहा, इदमग्नये कव्यवाहनाय ।**

**ॐ सोमाय पितृमते स्वाहा, । इदं सोमाय पितृमते ।**

हुतशेषान्नं सव्येन विश्वेदेवान्नपात्रे क्षिपेत्, अपसव्येन पितृब्राह्मणभोजनपात्रे च प्रक्षिपेत्।

## १७. भूस्वामी [५४]

तिलघृतमधुजलयुतमन्नं मोटकादिसहितमादाय दक्षिणाभिमुखो भूत्वा –

**ॐ इदमन्नं सजलमेतत्भूस्वामिपितृभ्यो नमः ।** इत्युत्सृजेत्।

## १८. अन्नसङ्कल्पः

सव्यं कृत्वा विश्वान् देवान् ध्यायन् सोपस्करं यवजलयुतमन्नमुपनीय मधुनाभिघार्य ऋजुहस्ताभ्यामन्नपात्रमालभ्य –

**ॐ पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽअमृतं जुहोमि स्वाहा ॥**

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा ॥**

**ॐ कृष्णकव्यमिदं रक्ष मदीयम् ॥**

५४. क्षेत्रपालमसंपूज्य यत्कर्म कुरुते क्वचित् । तस्य कर्मफलं हन्ति क्षेत्रपालो न संशयः । इति प्रयोगसारे ।

इति पठित्वा क्रमेणान्नजलघृतेषु विप्रदक्षिणाङ्गुष्ठं निवेशयेत् –

**ॐ इदमन्नम्** । **ॐ इमा आपः** । **ॐ इदमाज्यम्** । **ॐ इदं हविः** । **ॐ एतान्युकरणानि** ।

**ॐ यवोसि** इति मन्त्रेणान्नस्योपरि यवान् विकीर्य कुशयवजलान्यादाय वामहस्ताङ्गुष्ठाङ्गुलिभिः क्रमेणान्नमपश्च स्पृष्ट्वा –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानाम् (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिभ्यो विश्वेभ्यो देवेभ्यः पुरूरवार्द्रवनामभ्य अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे इदमन्नं सजलं सोपस्करं परिविष्टं परिवेक्ष्यमाणं चाक्षय्यतृप्तिहेतोर्वः स्वाहा** ॥

इति ब्राह्मणसमीपे भूमौ कुशादिकमुत्सृजेत्

ततोऽपसव्येन सोपस्करं तिलजलयुतमन्नमुपनीय मधुनाभिघार्य अधोमुखाभ्यां व्यस्ताभ्यां पाणिभ्यामन्नपात्रमालभ्य –

**ॐ पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽअमृतं जुहोमि** ॥

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्** । **समूढमस्य पाꣳसुरे**

इति पठित्वा क्रमेणान्नजलघृतेषु विप्रदक्षिणाङ्गुष्ठं निवेशयेत् –

**ॐ इदमन्नम्** । **ॐ इमा आपः** । **ॐ इदमाज्यम्** । **ॐ इदं हविः** । **ॐ एतान्युकरणानि** ।

ततोऽन्नस्योपरि तिलान् विकिरेत् [५५] – **ॐ अपहताऽअसुरा रक्षाꣳसि व्वेदिषदः** ।

मोटकादीन्यादाय वामहस्ताङ्गुष्ठाङ्गुलिभिः क्रमेणान्नमपश्च स्पृष्ट्वा –

**ॐ अद्येह (अमुक) सगोत्रेभ्यः अस्मत्पितृ-पितामह-प्रपितामहेभ्यः (अमुकामुकामुक) शर्मभ्यः सपत्नीकेभ्यो वसुरुद्रादित्यस्वरूपेभ्य इदमन्नं सजलं सोपस्करं परिविष्टं परिवेक्ष्यमाणं चाक्षय्यतृप्तिहेतोस्त्रेधा विभज्य युष्मभ्यं स्वधा** ।

इति ब्राह्मणसमीपे भूमौ मोटकादिकमुत्सृजेत्।

## १९. अपोशानम् कुशोपरि विशनञ्च

सव्येन देवब्राह्मणकरयोः **ॐ भवान् प्राशयतु** इत्यपोशानं दत्वाऽपसव्येन पितृब्राह्मणकरयोः **ॐ भवन्तः प्राशयन्तु** इत्यपोशानं दद्यात् ।

५५= सर्वदा च तिला ग्राह्याः पितृकृत्ये विशेषतः । भोज्यपात्रे तिलान् दृष्ट्वा निराशाः पितरो गताः ॥ इति पृथ्वीचन्द्रोदये पराशरः

## २०. प्रार्थना

सव्येन श्राद्धकर्ता कुशोपरि विशन् इति पठेत् –

**ॐ मधुव्वाता०** इत्यादिकं मन्त्रत्रयम्, **ॐ मधु-३**

**ॐ अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत्** ।

**तत्सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः** ॥

**नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे** ।

**नमः पिनाकहस्ताय वज्रहस्ताय वै नमः** ॥ इति

**ॐ यथासुखं जुषध्वम्** इति वचनानन्तरं ते ब्राह्मणा मौनिनो भूत्वा भुञ्जीरन्, हस्तसंज्ञया च भक्ष्यं प्रार्थयेयुः।

## २१. गायत्रीजपः पितृसूक्तपठनञ्च

सव्याहृतिकां गायत्रीं जपित्वा **ॐ मधुव्वाता०** इति ऋचश्च पठित्वा पितृसूक्तं पठेत्। ब्राह्मणाय यत्र यत्र इच्छोपलभ्यते तत्तत्प्रयच्छन् मन्दं मन्दं भोजयेत्।

## २२. विकिरासनम्

पितामहान्नपात्रसन्निधौ आस्तृतदक्षिणाग्रकुशत्रयायां [५६] भूमौ विकिरासनम्।

अपसव्येन मोटकादीन्यादाय –

**असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम्** ।

**उच्छिष्टभागधेयानां दर्भेषु विकिरासनम्** ॥

इति आस्तृतकुशोपरि मोटकमुत्सृजेत् [५७] ।

## २३. विकिरदानम्

सतिलघृतमन्नमादाय जलेनाप्लाव्य मोटकञ्चादाय –

**अग्निदग्धाश्च ये जीवा येऽप्यदग्धा कुले मम** ।

**भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्** ॥

इति मन्त्रेणाऽऽस्तृतकुशोपरि तदन्नं विकिरेत्।

---

५६. पार्वणे नैर्ऋतौ ज्ञेयं क्षय आग्नेय एव च। नान्दौ पूर्वं तथा ज्ञेयं प्रेतश्राद्धे तु दक्षिणे। इति भवदेवः।

५७. ततः कुशोदकमाषिञ्चेदिति याज्ञवल्क्यस्मृतौ मिताक्षराटीकायाम्।

ततः कुशान् परित्यज्य हस्तौ पादौ प्रक्षाल्य सव्येन द्विराचम्य गायत्रीं जपित्वा **ॐ मधुव्वाता०** इति ऋचां पाठः।

## २४. प्रत्यपोशानम्

ब्राह्मणान् तृप्तान् ज्ञात्वा विश्वेदेवब्राह्मणाय प्रत्यपोशानं दद्यात् – **ॐ जलगण्डूषमिदं ते** ।

बद्धाञ्जलिर्विश्वेदेवब्राह्मणं पृच्छेत् – **ॐ तृप्ताः स्थः** । **ॐ तृप्ताः स्मः** इति प्रतिवचनम्।

पुनः पृच्छेत् – **ॐ शेषमन्नं किं क्रियताम् ? ॐ इष्टैः सह भुज्यताम्** इति प्रतिवचनम्।

अपसव्येन पितृब्राह्मणाय प्रत्यपोशानं दद्यात् – **ॐ जलगण्डूषमिदं ते** ।

अञ्जलिं बद्ध्वा पितृब्राह्मणं पृच्छेत् – **ॐ तृप्ताः स्थः** । **ॐ तृप्ताः स्मः** इति प्रतिवचनम्।

पुनः पृच्छेत् – **ॐ शेषमन्नं किं क्रियताम् ? ॐ इष्टैः सह भुज्यताम्** इति प्रतिवचनम्।

पुनश्च पृच्छेत् – **ॐ पिण्डदानमहं करिष्ये** । **ॐ कुरुष्व** इति प्रतिवचनम्।

## २५. पिण्डिकानिर्माणम् संस्कारश्च

पिण्डदानार्थं हस्तमितां चतुरङ्गुलोच्छ्रितां सैकतादिकां दक्षिणप्लवां पिण्डिकां निर्माय पिण्डिकामध्ये वामेन पाणिना दर्भपिञ्जुलीं गृहीत्वा दक्षिणहस्ते कृत्वा सव्योपगृहीतदक्षिणपाणिना दक्षिणाग्रं रेखाद्वयं कुर्यात् – **ॐ अपहता असुरा रक्षाꣳसि व्वेदिषदः** ।

दर्भपिञ्जुलीमुत्तरस्यां क्षिप्त्वा **ॐ ये रूपाणि०** इति वेदिकायां परितः ज्वलदङ्गारं भ्रामयित्वा दक्षिणस्यां क्षिपेत्।

**ॐ शन्नोदेवीः** इति मन्त्रेण जलेन पिण्डिकासेचनम्, तदनु छिन्नमूलकुशान् पिण्डिकायां दद्यात्। ततः सव्येन **ॐ देवताभ्यः पितृभ्यश्च०** इति त्रिः पठेत् ।

## २६. अवनेजनम्

अपसव्यं कृत्वा पुटकमेकं वामहस्ते कृत्वा मोटकमादाय –

**ॐ अद्येह (अमुक) सगोत्र अस्मत्पितः (अमुक) शर्मन् वसुस्वरूप अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे पिण्डस्थानेऽत्रावनेजनं निक्ष्व ते स्वधा** ॥

इति छिन्नमूलकुशोपरि अवनेजनं दद्यात्। एवं पितामहप्रपितामहाभ्याञ्च ।

## २७. पिण्डदानम्

पिण्डान् निर्माय मोटकादीनि प्रथमं पिण्डं च गृहीत्वा वामहस्तेन पुटकादिस्थजलमादाय –

**ॐ अद्येह (अमुक) सगोत्र अस्मत्पितः (अमुक) शर्मन् एष पिण्डोऽमृतस्वरूपोऽक्षय्यतृप्तिहेतोस्ते स्वधा ।**

इति अवनेजनोपरि पिण्डं दद्यात्। एवं पितामहप्रपितामहाभ्यां च ।

तत आस्तृतकुशमूलेन **ॐ लेपभागभुजस्तृप्यन्तु** इति करं प्रोक्ष्य सव्येन द्विराचम्य हरिं स्मरेत्।

## २८. पितृध्यानम्

सव्येनैव पुष्पादीन्यादाय पित्रादीनुद्दिश्य वामावर्तेन पिण्डिकाया दक्षिणतो गत्वा उत्तराभिमुखो भूत्वा श्वासं नियम्य भास्करमूर्तिपितॄन् ध्यायेत् –

**ॐ अत्रपितरो मादयध्वं यथाभागमावृषायिषत ।**

अपसव्यं कृत्वा दक्षिणावर्तेन स्वासनं गत्वा दक्षिणाभिमुखः पिण्डेषु तत्पुष्पादीनि निक्षिपेत् –

**ॐ अमीमदन्त पितरो यथाभागमावृषायिषत ।**

## २९. प्रत्यवनेजनम्

ततोऽवनेजनपात्रं वामहस्ते कृत्वा मोटकमादाय –

**ॐ अद्येह (अमुक) सगोत्र अस्मत्पितः (अमुक) शर्मन् वसुस्वरूप अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे इदं पिण्डप्रत्यवनेजनं ते स्वधा ।**

इति पितृपिण्डे प्रत्यवनेजनं दद्यात्। एवं पितामहप्रपितामहपिण्डयोश्च ।

ततो नीवीं विस्रंस्य सव्यं कृत्वाऽऽचम्य हरिं स्मरेत्।

## ३०. सूत्रदानम्

अपसव्यं कृत्वा षट्कृत्वो मनसा नमस्कुर्वन् वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय –

**ॐ नमो वः पितरो रसाय, नमो वः पितरः शोषाय, नमो वः पितरो जीवाय, नमो वः पितरः स्वधायै, नमो वः पितरो घोराय, नमो वः पितरो मन्यवे, नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मै तद्वः पितो व्वासः ॥**

इति मन्त्रं पठित्वा प्रत्येकं पिण्डोपरि सूत्रं दद्यात्।

## ३१. पिण्डपूजनमर्पणञ्च

क्रमेण पिण्डान् गन्धादिभिः सम्पूज्य धूपदीपौ च कारयेत्। ततो मोटकमादाय –

**ॐ अद्येह (अमुक) सगोत्रा अस्मत्पितृ-पितामह-प्रपितामहाः (अमुकामुकामुक) शर्माणः सपत्नीका वसुरुद्रादित्यस्वरूपा अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे एतानि पिण्डार्चनानि अत्र सूत्रगन्धपुष्पाक्षतधूपदीपनैवेद्यानि त्रेधा विभज्य युष्मभ्यं स्वधा** ॥ इति गन्धादिकमुत्सृजेत्।

## ३२. जलपुष्पादिदानम्

सव्येन विश्वेदेवब्राह्मणकरयोः जलपुष्पतण्डुलान् क्रमेण प्रत्येकं दद्यात् –

**ॐ शिवा आपः सन्तु** इति जलम्,

**ॐ सौमनस्यमस्तु** इति पुष्पम्,

**ॐ अक्षतं चारिष्टमस्तु** इति तण्डुलान्।

एवमेव अपसव्येन पितृब्राह्मणकरयोश्च जलपुष्पतण्डुलान् क्रमेण प्रत्येकं दद्यात्।

## ३३. आशिषः प्रार्थना

सव्येनाञ्जलिं बद्ध्वा पूर्वाभिमुखो भूत्वा प्रार्थयेत् –

**ॐ अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम्।**
**ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु मे** ॥
**लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे।**
**लक्ष्मीर्वसति गोष्ठेषु सौमनस्यं ददातु मे** ॥
**अक्षतं चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिस्तथा।**
**यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम** ॥

## ३४. अभिषेकः

कर्मपात्रोदकं कुशैर्गृहीत्वा प्रतिमन्त्रं स्वशिरस्यभिषिञ्चेत् –

**ॐ अस्मत्कुले दीर्घमायुरस्तु। ॐ शान्तिरस्तु। ॐ पुष्टिरस्तु। ॐ वृद्धिरस्तु। ॐ यच्छ्रेयस्तदस्तु। ॐ यत्पापं तत्प्रतिहतमस्तु** (इति भूमौ)। **ॐ द्विपदे चतुष्पदेभ्यः शान्तिर्भवतु** (इति शिरसि)। ततोऽपसव्येन पिण्डशेषान्नं पिण्डसमीपे विकिरेत्।

## ३५. अक्षय्योदकदानम्

गङ्गाजलं वामहस्ते पुटकादौ गृहीत्वा मोटकादिकमादाय –

**ॐ अद्येह (अमुक) सगोत्रस्य अस्मत्पितुः (अमुक) शर्मणो वसुस्वरूपस्य अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे दत्तैतदन्नपानादिकम् अक्षय्यमस्तु** ।

इति पिण्डेऽक्षय्योदकं दद्यात् ।

ततः सव्येन कृताञ्जलिर्दक्षिणां दिशमवलोकयन् पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् –

**ॐ अघोराः पितरः सन्तु** इति ।

## ३६. आशिषः प्रार्थना

सव्येनैव प्राङ्मुखोऽञ्जलिं बद्ध्वा आशिषः प्रार्थयेत् –

(क) **ॐ गोत्रन्नो वर्धताम्** । **ॐ वर्धताम्** इति प्रतिवचनम् ।

(ख) **ॐ दातारो नोऽभिवर्धन्ताम्** । **ॐ वर्धन्ताम्** इति प्रतिवचनम् ।

(ग) **ॐ वेदाः वर्धन्ताम्** । **ॐ वर्धन्ताम्** इति प्रतिवचनम् ।

(घ) **ॐ सन्ततिर्वर्धताम्** । **ॐ वर्धताम्** इति प्रतिवचनम् ।

(ङ) **ॐ श्रद्धा च नो माव्यगमत्** । **ॐ मागात्** इति प्रतिवचनम् ।

(च) **ॐ बहुदेयं च नोऽस्तु** । **ॐ अस्तु** इति प्रतिवचनम् ।

(छ) **ॐ अन्नं च नो बहु भवेत्** । **ॐ भवतु** इति प्रतिवचनम् ।

(ज) **ॐ अतिथींश्च लभेमहि** । **ॐ लभध्वम्** इति प्रतिवचनम् ।

(झ) **ॐ याचितारश्च नः सन्तु** । **ॐ सन्तु** इति प्रतिवचनम् ।

(ञ) **ॐ मा याचिष्म कञ्चन** । **ॐ मा याचध्वम्** इति प्रतिवचनम् ।

(ट) **ॐ एताः सत्या आशिषः सन्तु** । **ॐ सन्तु** इति प्रतिवचनम् ।

## ३७. तिलककरणम्

श्राद्धकर्ता ब्राह्मणहस्तेन तिलकं कुर्यात्– **ॐ यं कामं कामयते सोऽस्मै कामः समृध्यताम्** । ततोऽपसव्येन सपवित्रान् कुशान्न्युब्जपात्राधःस्थितान् पिण्डोपरि निक्षिपेत् ।

## ३८. स्वधावाचनम्

**ॐ स्वधां वाचयिष्ये, ॐ वाच्यताम्** इति प्रतिवचनानन्तरं रिक्ताञ्जलिना पठेत् –

**ॐ अद्येह** (**अमुक**) **सगोत्रेभ्यः अस्मत्पितृ-पितामह-प्रपितामहेभ्यः** (**अमुकामुकामुक**) **शर्मभ्यः सपत्नीकेभ्यो वसुरुद्रादित्यस्वरूपेभ्य अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे स्वधोच्यताम्** ।

**ॐ अस्तु स्वधा** इति प्रतिवचनम् ।

## ३९. जलधारा पयोधारा च

जलादिसहितं पुटकं वामहस्ते कृत्वा सपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्यात् –

**ॐ ऊर्जं वहन्तीरमृतङ्घृतं पयः कीलालं परिस्रुतम्** । **स्वधास्थ तर्पयत मे पितॄन्** ॥

तदनु स्वाचारात् पयोधारां च दद्यात् ।

ततो ब्राह्मणं पृच्छेत् – **ॐ पिण्डाः सम्पन्नाः** । **ॐ सुसम्पन्नाः,** इति प्रतिवचनम् ।

पुनः पृच्छेत् – **ॐ पिण्डानुत्थापयामि** । **ॐ उत्थापयस्व** इत्यनुज्ञातः सन्,

सव्येन नम्रीभूय पिण्डानाघ्राय अपसव्येन पिण्डानुत्थापयेत् ।

पिण्डाधारकुशानुल्मुकाँश्च वह्नौ क्षिपेत् ।

## ४०. पिण्डिकायां शृङ्खचक्रलेखनम् तत्पूजनञ्च [५८]

सव्येन पिण्डिकायां शृङ्खं चक्रं च विलिख्य यवैः पूजयेत् –

**ॐ शृङ्खाय नमः, ॐ चक्राय नमः** ।

## ४१. गयागमनम् पितृस्मरणञ्च

अपसव्यं कृत्वा उत्थाय पिण्डान् पिण्डिकोपरि निदध्यात् –

**ॐ गयायां पितृरूपेण स्वयमेव जनार्दनः** ।

**तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात्** ॥

---

५८. अत्रैव वसन्तादि ऋतुपूजनं युक्तम् वसन्तादिपूजनानन्तरमाघ्राणं युक्तं अन्यथोच्छिष्टे पूजनमनुचितमेवाहुः, श्राद्धचिन्तामणिकारादयः ।

## ४२. पिण्डपूजनम् कर्पूरदीपदानञ्च

सव्येन वसन्तादीन् षड्तून् पूजयेदेभिर्मन्त्रैः –

**ॐ वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमो नमः ।**

**वर्षाभ्यश्च शरत्संज्ञ ऋतवे च नमो नमः ॥**

**हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च ।**

**माससंवत्सरेभ्यश्च दिवसेभ्यो नमो नमः ॥**

ततः कर्पूरदीपं दत्त्वा सव्येनैव विश्वेदेवार्घपात्रं सञ्चाल्य अपसव्येन पित्रर्घपात्राण्युत्तानीकृत्य सव्येन दक्षिणां दद्यात् ।

## ४३. दक्षिणादानम्

कुशयवजलदक्षिणाद्रव्याण्यादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानां (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां पुरूरवार्द्रवनाम्नां विश्वेदेवपूर्वकाणाम् अद्यकृतैतत् सांवत्सरिकैकपार्वणश्राद्धे श्राद्धसम्बन्धिवैश्वदेविकश्राद्धप्रतिष्ठासिद्ध्यर्थम् इमां दक्षिणां हिरण्यमग्निदैवतं तन्मूल्योपकल्पितं द्रव्यं यथादैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय दक्षिणात्वेन तुभ्यमहं सम्प्रददे** ॥ इति ब्राह्मणकरे उत्सृजेत्

ततः कुशतिलजलदक्षिणाद्रव्याण्यादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानां (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणाम् अद्यकृतैतत् सांवत्सरिकैकपार्वणश्राद्ध-प्रतिष्ठासिद्ध्यर्थम् इमां दक्षिणां रजतं चन्द्रदैवतं तन्मूल्योपकल्पितं द्रव्यं यथादैवतम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय दक्षिणात्वेन तुभ्यमहं सम्प्रददे** ॥ इति ब्राह्मणकरे उत्सृजेत्

पुनः कुशतिलजलभूयसीदक्षिणाद्रव्याण्यादाय –

**ॐ अद्येह (अमुक) सगोत्राणाम् अस्मत्पितृ-पितामह-प्रपितामहानां (अमुकामुकामुक) शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां विश्वेदेवपूर्वकाणाम् अद्यकृतैतत् सांवत्सरिकैकपार्वणश्राद्धप्रतिष्ठासिद्ध्यर्थम् न्यूनातिरिक्तपरिपूर्णार्थं यद्देयम् अन्नादिकं दक्षिणाद्रव्यं यथानामदैवतं नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यः कन्याकुमारेभ्यश्च यथाभागं विभज्य यथाकाले दातुमहमुत्सृजे** । इत्युत्सृजेत्

## ४४. पितृविसर्जनम्

अपसव्येन **ॐ व्वाजेवाजेऽवत०** इति पित्रादीन् विसृज्य **ॐ आमावाजस्य०** पठेत् ।

## ४५. विश्वेदेवविसर्जनम्

सव्यं कृत्वा **ॐ पुरूरवार्दवनामानो विश्वेदेवाः प्रीयन्ताम्** इति विश्वेदेवविसर्जनम् ।

ततः पठेत् –

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः** ॥ इति त्रिः

## ४६. दीपाच्छादनम्

अपसव्येन दीपाच्छादनं विधाय सव्यं कृत्वा हस्तौ पादौ प्रक्ष्याल्याऽऽचम्य पठेत् ।

## ४७. कर्मसमर्पणम्

**ॐ यत्कृतं तत् सुकृतमस्तु, यन्न कृतं तद्विष्णोः प्रसादात् ब्राह्मणवचनाच्च सर्वं परिपूर्णमस्तु** ॥१॥

**ॐ प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।**

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः** ॥२॥

**आयुः प्रजां धनं विद्यां स्वर्ग-मोक्ष-सुखानि च** ॥

**प्रयच्छन्तु तथा राज्यं पितरः श्राद्धतर्पिताः** ॥३॥

**कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिस्वभावात्** ।

**करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पये तत्** ॥

## ४८. अच्युतस्मरणम्

**ॐ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।**

**न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्** ॥ ॐ अच्युताय नमः-३

**ॐ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।**

**हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु** ॥ ॐ विष्णवे नमः-३

॥ इत्येकपार्वणश्राद्धविधिः ॥

## शब्दार्थाः

अयः = फलाम

पूर्वाह्णः = विहान (प्रातः काल)

मध्याह्नः = दिउँसो १२ बजे

अपराह्णः = बेलुका २ वजेपछि

पुंश्चली = वेश्या, स्वेच्छाचारिणी

बन्ध्या = वाँझी स्त्री, अप्रसूता

विद्रवन्ति = भाग्दछन्

जुष्टेषु = सम्मिलित भएका

कृत्रिमायाम् = बनावटी

पारक्यादिषु = अर्काको

कितवः = जुवाडे, धूर्त

ब्रह्महा = ब्रह्महत्या गर्ने

यक्ष्मी = टी. वि.रोगी

पशुपालः = गोठालो

निराकृतिः = आकार नभएको

ग्रामप्रेष्यः = गाउँको सेवक

वार्धुषिकः = व्याज लगाएर खाने

गायकः = गायक, गाइने

सर्वविक्रयी = सबै थोक बेच्ने

कुतपः = दिनको आठौँ भाग

विकिरदानम् = संस्कार न भएका र अगति परेर मरेकालाई दिने भाग

नोपसर्पति = प्राप्त हुँदैन

आघ्राय = वास्नालिएर (सुँघेर)

प्रयान्ति = जान्छन्

नेपालकम्बलः = राडी, पाखी

रौप्यम् = चाँदी

दौहित्रः = छोरीको छोरो

क्रतुः = यज्ञ

पिण्डपातनम् = पिण्डदान

आषाढीम् = आषाढशुक्ल पूर्णिमा

अतन्द्रिता = अल्छी नगरिकन

आकरे = खानीमा

वाम = देब्रे

पाणिना = हातले

जानु = घुडा

प्रक्षालनम् = पखाल्नु, धुनु

पादार्घः = गोडा धुने जल वा अर्घपात्र

उपवेशयेत् = बसाओस्

दिग्बन्धनम् = सबै दिशामा तिल छरेर श्राद्धमा विघ्नबाधा गर्नेलाई हटाउनु

नीविबन्धनम् = मोटक र फूल कम्मरमा बाँध्नु

हस्तार्घः = ब्राह्मणको हात धुने अर्घपात्र

| | |
|---|---|
| उत्सादनम् = हटाउनु | अवनेजनम् = कुशको आसन |
| पुटकम् = दुनु | उदकम् = पानी |
| पिधाय = ढाकेर | उत्थापनम् = उठाउनु |
| न्युञ्जं कुर्यात् = घोप्ट्याओस् | पिण्डिकोपरि = पिण्डवेदीमाथि |
| अभ्यर्च्य = पूजागरेर | निधाय = राखेर |
| अग्नौकरणम् = पितृलाई आहुति दान हवन वा | अर्चयेत् = पूजा गरोस् |
| सोपस्करम् = सामग्रीले सहित | |
| अपोशानम् = जलदान | |

### श्राद्धका लागि आवश्यक सामग्रीहरू

जौ, तिल, कुश, चन्दन, अक्षता, सेतो वा पँहेलो फूल, धुप, बत्ती, कपुर, नैवेद्य, पक्वान्न, फलफूल, सेतो वस्त्र, सूत्र, जनै, सुपारी, पान, सिद्धान्न, दुध, दही, घिउ, मह, सख्खर वा चिनी, बालुवा, पिण्डका लागि पायस वा जौको पिठो, तेल, दियो, दियो राख्ने चामल, ब्राह्मण थाप्ने चामल, टपरी, बोहोता, दुना, चारकुने, आसनी, पञ्चपात्र, कर्मपात्र, कुशका ब्राह्मण, कुशका मोटक, पवित्र, कुशका औँठी, कसौँडी, चुल्हो, अर्घ, खगौतो, वालुवा, विष्णुपादुका, गङ्गाजल, चोखो पानी, कर्ताले लाउने धोती/उपर्ना, भेटी, दक्षिणा, मासका बारा (फुलौरा) आदि। सम्भव भएसम्म श्राद्धमा चाँदी वा तामाका पात्र प्रयोग गर्नुपर्दछ। स्टील/फलामका पात्र त निन्दित छन्।

# अभ्यासः

१. **शब्दार्थमुल्लिख्य वाक्येषु प्रयोजयत**

रौप्यम् । आघ्राय । उदकम् । न्युब्जम् । पूर्वाग्रम् । पाणिना ।

२. **पाठ्यांशमनुसृत्य रिक्तस्थानं पूरयत**

(क) सर्वायास ........................ वर्जितैः ।

.................................. कर्मणि ॥

(ख) सप्त व्याधा ............................... ।

..................................... मानसे ॥

(ग) प्रयान्तु ............................ तथा ।

.............. क्षिपामि ............... ॥

(घ) अपां मध्ये ................. प्रतिष्ठितम् ।

............... न्यस्ताः ........... मे ॥

३. **कोष्ठस्थं सर्वोपयुक्तं पदमवचित्य वाक्यपूर्णो विधेयः**

(क) महालयश्राद्धे ...... विकिरं प्रदीयते । (आग्नेय्याम्, दक्षिणस्याम्, नैर्ऋत्याम्)

(ख) पार्वणश्राद्धे ......ब्राह्मणाः भवन्ति । (त्रीणि, चत्वारि, पञ्च, षट्)

(ग) श्राद्धस्य दीपो ...... आच्छाद्यते । (उपवीतिना, निवीतिना, प्राचीनावीतिना)

(घ) एकपार्वणश्राद्धे ......पिण्डा । (१, ३, ४, ६)

४. **अधस्तनप्रश्नानामुत्तरं देयम्**

(क) पार्वणश्राद्धे किन्नामधेयौ विश्वेदेवौ भवतः ?

(ख) श्राद्धे के के प्रशस्ता भवन्ति ?

(ग) ब्राह्मणनिमन्त्रणप्रकारः प्रदर्शनीयः ।

(घ) महालयश्राद्धस्य षोडशदिने करणासम्भवे कदा कार्यम् ?

(ङ) कर्मपात्रे प्रक्षेपणीयानि वस्तूनि मन्त्रप्रतीकानि च लेख्यानि ।

(च) दिग्बन्धनशब्दस्य कोऽर्थः ? किमर्थं दिग्बन्धनं क्रियते ?

(छ) पार्वणश्राद्धे कति पित्रर्घपात्राणि भवन्ति तेषां धारणक्रमश्च कः ?

(ज) विकिरासनविकिरदानमन्त्रौ पूरणीयौ।

(झ) पिण्डवेद्या निर्माणप्रमाणमुल्लिख्य तत्संस्कारक्रमश्च प्रदर्शनीयः।

(ञ) पिण्डदानस्य सङ्कल्पवाक्यं रचयत ।

(ट) **अमीमदन्तपितरो यथाभागमा वृषायिषत** मन्त्रस्यास्य कुत्र विनियोगः ?

(ठ) अक्षय्योदकदानवाक्यं प्रदर्शनीयम्।

(ड) पयोधाराप्रदानमन्त्रः पूरणीयः ।

(ढ) तीर्थश्राद्धे के के विवर्जनीयाः भवन्ति ?

(ण) एकपार्वणश्राद्धे कति ब्राह्मणाः कति पिण्डाश्च भवन्ति ?

(त) पितृविसर्जनमन्त्रः पूरणीयः ।

(थ) पितृभ्यः स्वधायिभ्यः..... मन्त्रमिमं पूरयत ।

॥ इति ॥